

## विषयानुक्रम





## किंचिद्वक्तव्यम् ॥

आ श्री उत्तराध्ययन ग्रंथनी आवश्यकता घणा वखत थयां हती परंतु कागलनी मोंघवारीने लइने प्रकाशन थइ शकतुं न्होतुं. आ ग्रंथ उपर अनेक टीकाओ-वृत्तिओ पूर्वाचार्योए लखी छे जेमां श्री भावविजयजीगणि, श्री लक्ष्मीवल्लभसूरि, श्री जयकीर्तिसूरि अने श्री कमलसंयमी आटली टीकाओ तो प्रसिद्ध थइ गइ छे. आ ग्रंथनी वृत्तिना कर्ता शासनप्रभावक वादीवेताल श्री शांतिसूरिजी छे. वृत्तिकार-घणा प्राचीन वखतमां थयेला छे तेमज आ वृत्तिने चौदपूर्वधर श्रीमद् भद्रबाहुस्वामि कृत निर्युक्तिनी गाथाओ तथा संस्कृतमां छाया आपीने विशेष सुलभ बनावेल छे अने बीजी टीकाओ करतां आ टीकानी महत्ता पण विशेष छे. प्रथम आ टीका श्रीयुत् देवचंद लालभाइ जैन पुस्तकोद्धार फंड तरफथी त्रण भागमां प्रसिद्ध थयेल अने ते ग्रंथने मुद्रित थये लगभग पचीस वर्षनो टाइम थइ गयेल छे अने एक पण प्रति दशगुणी किंमते पण पूर्वे मलती न्होती, अने हालमां पण मळती नथी. आथीज अभ्यासीओ लाभ लइ शके ते हेतुथी मारा मुद्रणालयमां आ ग्रंथ छापवानी में शरुआत करी. प्रथम भाग छपाइ गया बाद एक नकल पूज्यपन्यासप्रवर श्री चंद्रसागरगणीन्द्र महाराजने वडोदरा मुकामे मोकलवामां आवी हती तेमने आ प्रतिओनी जरुरीयात जाणीने विशेष उपयोगी लागतां तमाम प्रतो खरीदीलेवा माटे मध्यभारत-मालवा प्रांतीय उज्जैननी श्री रूपभदेवजी छगनीरामजीनी पेढीना संचालकोने संबोधन कर्युं अने तमाम प्रतो ते पेढी तरफथी खरीदाइ जतां ग्रंथनी लगभग पडतर किंमत राखी वेचाण करवानुं नक्की थतां आ ग्रंथनो प्रथम भाग जेमां त्रण अध्ययन आवेलां छे तेनी किंमत रु. ६-०-० राखी वेचवा माटे मारा मुद्रणालयने ते कार्य सोंपवामां आव्युं छे. आ रीते आ ग्रंथ त्रण भागमां संपूर्ण थशे अने ते प्रमाणे प्रत्येक भागनी किंमत रु. ६-०-० राखवा नक्की करेल छे.

आ ग्रंथनी शुद्धि माटे में प्रथम छपायेल आवृत्तिना आधारे यथाशक्ति ध्यान राखी प्रुफ रीडींग करेल छे, छतां ग्रंथमां शुद्धिपत्रक बीजा भागने अंते आपवामां आवशे. पू. पन्यासप्रवर श्री चंद्रसागरजीना सदुपदेशथी आ ग्रंथनी मुद्रित प्रतिओ उपर जणावेल पेढी तरफथी खरीदवानुं नक्की थतां बीजो भाग मुद्रणनुं काम शरु करीने आपता थयेमां बीजो भाग मुद्रण करवानो म्हारो मार्ग खुल्लो करी आपवाथी तेओश्रीनो अने आ ग्रंथ छापवा माटे मने असल कोपी स्वनामधन्य शेठ श्री देवचंद लालभाई पुस्तकोद्धार खाता तरफथी मळेल होवाथी तेमनो पण उपकार मानीने अत्रे विरमुं छुं.

लि. बालुभाई हीरालाल लालन,
प्रो. सरस्वती मुद्रणालय-गोपीपुरा-सुरत.



अर्हम्

पूर्वोद्धृतजिनभाषितश्रुतस्थविरसन्दृब्धानि

श्रुतकेवलिश्रीभद्रबाहुस्वामिसङ्कलितनिर्युक्तियुतानि

तालश्रीशान्त्याचार्यविहितशिष्यहिताख्यवृत्तियुक्तानि

# श्रीउत्तराध्ययनानि ।



शिवदाः सन्तु तीर्थेशा, विघ्नसङ्घातघातिनः । भवकूपोद्धृतौ येषां, वाग् वरत्रायते नृणाम् ॥ १ ॥
समस्तवस्तुविस्तारे, व्यासर्पत्तैलवज्जले । जीयात् श्रीशासनं जैनं, धीदीपोद्दीप्तिवर्द्धनम् ॥ २ ॥
यत्प्रभावादवाप्यन्ते, पदार्थाः कल्पनां विना । सा देवी संविदे नः स्तादस्तकल्पलतोपमा ॥ ३ ॥

व्याख्याकृतामखिलशास्त्रविशारदाना, सूक्ष्मप्रबोधरधिया शिरमस्तु तेषाम् ।
यैरत्र गाढतरगूढविचित्रसूत्रग्रन्थिर्विभिद्य विहितोऽद्य ममापि गम्यः ॥ ४ ॥
अध्ययनानामेषां यदपि कृतश्चूर्णिवृत्तयः कृतिभिः । तदपि प्रवचनभक्तिस्त्वरयति मामत्र वृत्तिविधौ ॥ ५ ॥

इह खलु सकलकल्याणनिबन्धन जिनागममवाप्य विवेकिनैव विवेचनीय—यदुत महार्घोऽय मनोरथानामप्यपथभूतो भूरिजन्मा
तरोपचितपुण्यपरिपाकतो महानिधिरिव मयाऽधिगत, तथाहि—महति संसारमण्डलेऽस्मिन् मानसादिदुःखैरभिहन्यमानाः क-
न्धेषुविविधार्थी महापुरीमिव मनुजगतिमनुप्रविशन्ति जन्तव, अनुप्रविश्यापि चाम्यामौदार्यैरध्यिका१ इयाकृतसुकृतसम्भारा
नेरीक्षितुमपि नैनं क्षमन्ते, किमङ्ग पुनरवाप्तुमिति ? एतदवाप्तौ सर्वथा कृतार्थोऽस्मि, सम्भवति चास्मात् स्वोपकारवत्परोपकारेऽपि
त्किरिति नेदानीं युक्ता कदर्यता२, किन्तु भवितव्यमुदाराशयेन, परोपकारपूर्विकैव च स्वोपकार प्रवृत्तिरुदाराशयतां व्यापयतीति
परोपकार एवादित. प्रवर्तितुमुचितम् । सन्ति चास्मिन् महितमाहात्म्याः समीहितसम्पादकाश्च मणय इव चरणकरणादिगोचराचा-
र्यज्ञानुयोगा, न चैते इदानीं सम्यग्दर्शनादिहेतुं मिथ्यात्वादिपिशाचदमनं धर्मकथात्मकोत्तराध्ययनानुयोगं रक्षाविधानमिवापत्राय
वय ग्रहीतुमन्यस्मै वा दातुं युज्यन्ते, इत्यारभ्यत उत्तराध्ययनानुयोग –तत्र च न तथाविधफलादिपरिज्ञानविकला प्रेक्षावता प्रवृत्ति,
स्यात्तद्व्यापकत्वाद्, व्याप्यस्य च व्यापकाविनाभावित्वात्, अतः प्रेक्षावत्प्रवृत्त्यङ्गत्वात् फलयोगमङ्गलसमुदायार्थानुयोगद्वारतद्भेदनिद-
र्शनप्रयोजनानि वाच्यानि । यच्च शब्दस्याप्रमाणत्वमभिधाय तदभिधानस्यानर्थक्यमिह कैश्चिदुक्तं, तदसाधु, शब्दस्याप्रमाणत्वे त-
प्रामाण्यमूलत्वेन सकलव्यवहाराणामुच्छेदप्रसङ्गात्, उक्तं हि—" लौकिकव्यवहारोऽपि. यस्मिन्न व्यपतिष्ठते । तत्र साधुत्वविज्ञानं

१ भिक्षाचरा । २ कृपणता ।

फलजोगमङ्गलसमुदायत्था तद्देव
व्यामोहोपनिबन्धनम् ॥ १ ॥ इति । तथा च शास्त्रादौ फलादिप्रतिपादिका पूर्वाचार्यगाथा–' १तस्स फलजोगमङ्गलसमुदायत्था तद्देव
दाराइं । तम्मेयनिरुत्तिक्कमपयोयणाइं च वच्चाइं ॥ १ ॥ ' फलाभिलाषिणां च सकलप्रेक्षावतां प्रवृत्तिरिति प्रथमतः फलस्याभिधानं
तत्रापि किमिदं सम्बद्धमुतासम्बद्धमिति विचारत एव विपश्चितः प्रवर्तन्त इति तदनु योगस्य, इत्यादिक्रमप्रयोजनं सर्वत्र योज्यं,
तत्र फलं कर्तुः श्रोतुश्चाव्यवहितं विनेयानुग्रहो यथावदर्थावबोधश्च, व्यवहितं पुनरुभयोरपि तदुत्तरोत्तरगुणप्रकर्षप्राप्त्याऽपवर्गावाप्ति
रिति । योगः–सम्बन्धः, स च हेतुतः फलतश्च, तत्र हेतुत उत्तराध्ययनानुयोगस्य साक्षात्कृतधर्माणः सूत्रकृत एव यथास्वं प्रणेतारः
ततस्तदवबोधिततदर्थास्तच्छिष्याः ततोऽपि तद्विनेयास्तावद् यावद्भगवान् भद्रबाहुः ततो भाष्यकृतस्ततश्चूर्णिकृतः ततोऽपि वृत्तिकृतो याव-
दस्मद्गुरव इति गुरुपर्वक्रमलक्षणः । फलतस्तूपायोपेयभावरूपः अभिहितफलस्योपेयत्वात् प्रस्तुतानुयोगस्य च तदुपायत्वादिति । मङ्गाति-
विनाशयति शास्त्रपारगमनविघ्नान् गमयति–प्रापयति शास्त्रस्थैर्यं लालयति च–श्लेषयति तदेव शिष्यप्रशिष्यपरम्परायामिति मङ्गलं, यद्वा
मन्यन्ते अनपायसिद्धिं गायन्ति प्रबन्धप्रतिष्ठितिं लान्ति वाऽव्यवच्छिन्नसन्तानाः शिष्यप्रशिष्यादयः शास्त्रमस्मिन्निति मङ्गलम् , आदि-
मध्यावसानवर्तिनस्तस्योक्तरूपार्थप्रसाधकत्वेन प्रसिद्धत्वात् , उक्तं हि—" २तं मङ्गलमाईए मज्झे पज्जंतए य सत्थस्स । पढमं सत्थ-
त्थाविग्घपारगमणाय निद्दिट्ठं ॥ १ ॥ तस्सेव उथिज्जत्थं मज्झिमयं अंतिमं च तस्सेव । अव्वोच्छित्तिनिमित्तं सिस्सपसिस्साइवंसस्स
॥ २ ॥ " तच्च नामादिचतुर्भेदं, तत्र मङ्गलमिति नामैव नाममङ्गलं, स्थापनामङ्गलं मङ्गलाकारः, मङ्गलानि च दर्पणादीनि, यथोक्तम्–
॥ २ ॥ ॥ " तच्च नामादिचतुर्भेदं, तत्र मङ्गलमिति नामैव नाममङ्गलं, स्थापनामङ्गलं मङ्गलाकारः, मङ्गलानि च दर्पणादीनि, यथोक्तम्–
" सोच्छिय नंदावत्ता लिहिया अट्ठट्ठ मंगलगा ॥ १ ॥ " इति, द्रव्यभावमङ्गले
३दप्पण भद्दासण वद्धमाण वरकलस मच्छ सिरिवच्छा । सोच्छिय नंदावत्ता लिहिया अट्ठट्ठ मंगलगा ॥ १ ॥

१ तस्य फलयोगमङ्गलसमुदायार्थास्तथैव द्वाराणि । तद् ( द्वार ) भेदनिरुक्तिक्रमप्रयोजनानि च वाच्यानि ॥ १ ॥
२ तन्मङ्गलमादौ मध्ये पर्यन्ते च शास्त्रस्य । प्रथमं शास्त्रस्याविघ्नपारगमनाय निर्दिष्टम् ॥ १ ॥ तस्यैव तु स्थैर्यार्थं मध्यममन्तिमं च तस्यैव । अव्यवच्छित्ति-
निमित्तं शिष्यप्रशिष्यादिवंशे ॥ २ ॥ ३ दर्पणं भद्रासनं वर्धमानो वरकलशो मत्स्यः श्रीवत्सः । स्वस्तिको नन्द्यावर्तो लिखितान्यष्टाष्ट मङ्गलानि ॥ १ ॥

व्याख्या—इह च सुपो यत्रादर्शनं तत्र सूत्रत्वेन छान्दसत्वात् लुक्। तथोत्तरनिक्षेपप्रस्तावात् सूचकत्वात्सूत्रस्य 'कमउत्तरेण पगय' मित्युत्तरश्रवणाच्च 'नामं' ति नामोत्तरं 'ठवणं' ति स्थापनोत्तरमित्याद्यभिलापः कार्यः। तत्र नामोत्तरमुत्तरमिति नामैव यस्य वा जीवादेरुत्तरमिति नाम क्रियते, स्थापनोत्तरमक्षादि, उत्तरमिति वर्णविन्यासो वा, द्रव्योत्तरमागमतो ज्ञाताऽनुपयुक्तो नोआगमतो ज्ञशरीरभव्यशरीरे तद्व्यतिरिक्तं च, तत्र तद्व्यतिरिक्तं त्रिधा—सचित्ताचित्तमिश्रभेदेन, तत्र सचित्तं पितुः पुत्रः, अचित्तं क्षीरात् दधि, मिश्रं जननीशरीरतो रोमादिमदपत्यम्, इह च द्रव्यपर्यायोभयात्मकत्वेऽपि वस्तुनो द्रव्यप्राधान्यविवक्षया पित्रादेरूर्ध्वभवनतश्च पुत्रादीनां द्रव्योत्तरत्वं भावनीयं, क्षेत्रोत्तरं मेर्वाद्यपेक्षया यदुत्तरं, यथोत्तराः कुरवः, यद्वा पूर्वं शालिक्षेत्रं तदेव पश्चादिक्षुक्षेत्रं, दिगुत्तरमुत्तरा दिग्, दक्षिणदिगपेक्षत्वादस्य, तापक्षेत्रोत्तरं यत्तापदिगपेक्षयोत्तरमित्युच्यते, यथा-सर्वेषामुत्तरो मन्दराद्रिः, प्रज्ञापकोत्तरं यत् प्रज्ञापकस्य वामं, प्रत्युत्तरमेकदिगवस्थितयोर्देवदत्तयज्ञदत्तयोर्देवदत्तात् परो यज्ञदत्त उत्तरः, कालोत्तरः समयादावलिका आवलिकातो मुहूर्तमित्यादि, सञ्चयोत्तरं यत्सञ्चयोपरि, यथा धान्यराशेः काष्ठं, प्रधानोत्तरमपि त्रिविधं-सचित्ताचित्तमिश्रभेदात्, सचित्तप्रधानोत्तरमपि त्रिधैव, तद्यथा—द्विपदं चतुष्पदमपदं च, तत्र द्विपदमनुत्तरपुण्यप्रकृतितीर्थकरनामाद्यनुभवनतः तीर्थकरः, चतुष्पदमनन्यसाधारणशौर्यधैर्यादियोगतः सिंहः, अपदं रम्यत्वसुरसेव्यत्वादिभिर्जात्यजाम्बूनदादिमयी जम्बूद्वीपमध्यस्थिता सुदर्शनाजम्बूः, अचित्तमचिन्त्यमाहात्म्यश्चिन्तामणिः, मिश्रं तीर्थकर एव गृहस्थावस्थायां सर्वालङ्कारालङ्कृतः, ज्ञानोत्तरं केवलज्ञानं, विलीनसकलावरणत्वेन समस्तवस्तुस्वभावाभासितया च, यद्वा श्रुतज्ञानं, तस्य स्वपरप्रकाशकत्वेन केवलादपि महर्द्धिकत्वात्, उक्तं च—" १ सुयणाणं महिड्ढीयं, केवलं तयणंतरं। अप्पणो य परेसिं च, जम्हा तं परिभावणं ॥ १ ॥ ति, क्रमोत्तरं क्रममाश्रित्य यद्भवति, तच्चतुर्विधं—द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतः परमाणोर्द्विप्रदेशिकः ततोऽपि त्रिप्रदेशिकः एवं यावदन्त्योऽनन्तप्रदे-

१ श्रुतज्ञानं महर्द्धिकं केवलं तदनन्तरम्। आत्मनश्च परेषां न यस्मात्तत्परिभावनम् ॥ १ ॥

शिकः स्कन्धः, क्षेत्रत एकप्रदेशावगाढात् द्विप्रदेशावगाढः ततोऽपि त्रिप्रदेशावगाढ एवं यावदवसानवर्त्यसङ्ख्येयप्रदेशावगाढः, कालत एकसमयस्थितेर्द्विसमयस्थिति ततोऽपि त्रिसमयस्थिति, एवं यावदसङ्ख्येयसमयस्थिति, भावत एकगुणकृष्णात् द्विगुणकृष्णः ततोऽपि त्रिगुणकृष्ण एवं यावदनन्तगुणकृष्ण, भावतो वा—क्षायोपशमिकादिभावादनन्तरं य क्षायिकादिर्भवति, 'गणणाओ 'त्ति गणनात उत्तरमेककाद् द्विकस्ततोऽपि त्रिक एव यावच्छीर्षप्रहेलिका, भावोत्तरं क्षायिको भाव, तस्य केवलज्ञानदर्शनाद्यात्मकत्वेन सकलौदयिकादिभावप्रधानत्वाद्। आह—एवमस्य प्रधानोत्तर एवान्तर्भावादयुक्तं भेदेनाभिधानं, यद्येवमल्पमिदमुच्यते, एवं हि नामादिचतुष्टय एव सर्वनिक्षेपाणामन्तर्भावात्तदेवाभिधेयं, तत्र इहान्यत्र च यन्नामादिचतुष्टयाधिकनिक्षेपाभिधानं तच्छिष्यमतिव्युत्पादनार्थं सामान्यविशेषोभयात्मकत्वख्यापनार्थं च सर्ववस्तूनामिति भावनीयमिति गाथार्थः॥ १॥ इहानेकधोत्तराभिधानेऽपि प्रमोत्तरमेवाधिकरिष्यति, विषयज्ञाने च विषयी सुज्ञानो भवति इति मन्वानो यत्रास्य सम्भवो यत्र चासम्भवो यत्र चोभय तदेवाह—

जहण्ण सुत्तर खलु उक्कोस वा अणुत्तर होइ। सेसाइं उत्तराइं अणुत्तराइं च नेयाणि॥ २॥ नि०

व्याख्या-जघन्य सोत्तरं खलु' अवधारणे, सोत्तरमेव उक्कोसं' ति उत्कृष्ट, वाशब्दस्यैवकारार्थस्य भिन्नक्रमत्वाद् अनुत्तरमेव भवति शेषाणि' मध्यमानि 'उत्तराणि' इति अर्शआदित्वेनाजन्तत्वात् मतुब्लोपाद्वोत्तरवन्ति अनुत्तराणि च ज्ञेयानि। द्रव्योपमोत्तरादीनि हि जघन्यान्येकप्रदेशिकादीनि उपरि द्विप्रदेशिकादिवस्त्वन्तरभावात् सोत्तराण्येव, तदपेक्षयैव तेषा जघन्यत्वात्, उत्कृष्टानि त्वन्त्यानन्तप्रदेशिकादीन्यनुत्तराण्येव तदुपरि वस्त्वन्तराभावाद्, अन्यथोत्कृष्टत्वायोगात्, मध्यमानि तु द्विप्रदेशिकादीनि त्रिप्रदेशिकाद्यपेक्षया सोत्तराणि एकप्रदेशापेक्षया त्वनुत्तराणि, उपरितनवस्त्वपेक्षयैव सोत्तरत्वात् इति गाथार्थः॥ २॥ उत्तरस्यानेकविधत्वेन येनात्र प्रकृत तदाह—

क्रमउत्तरेण पगयं आयारस्सेव उवरिमाइं तु । तम्हा उ उत्तरा खलु अज्झयणा हुंति णायव्वा ॥ ३ ॥ नि०

व्याख्या—क्रमापेक्षमुत्तरं क्रमोत्तरं, शाकपार्थिवादित्वान्मध्यपदलोपी समासः, तेन ' प्रकृतम् ' अधिकृतम्, इह च क्रमोत्तरे-
णेति भावतः क्रमोत्तरेण, एतानि हि श्रुतात्मकत्वेन क्षायोपशमिकभावरूपाणि तद्रूपस्यैवाऽऽचाराङ्गस्योपरि पठ्यमानत्वेनोत्तराणीत्यु-
च्यन्ते, अत एवाह—' आयारस्सेव उवरिमाइं'ति एवकारो भिन्नक्रमः, ततश्चाचारस्योपर्येव—उत्तरकालमेव 'इमानी'ति हृदि विपरीव-
र्तमानतया प्रत्यक्षाणि, पठितवन्त इति गम्यते, 'तुः' विशेषणे, विशेषश्चायं यथा—शय्यम्भवं यावदेष क्रमः, तदाऽऽरतस्तु दशवैकालिकोत्तरकालं
पठ्यन्त इति ' तम्हा उ'त्ति 'तुः' पूरणे, यत्तदोश्च नित्यमभिसम्बन्धः, ततो यस्मादाचारस्योपर्येवेमानि पठितवन्तस्तस्माद् 'उत्तराणि'
उत्तरशब्दवाच्यानि, 'खलुः' वाक्यालङ्कारेऽवधारणे वा, तत उत्तराण्येव 'अध्ययनानि' विनयश्रुतादीनि भवन्ति 'ज्ञातव्यानि' अवबो-
द्धव्यानि प्राकृतत्वाच्च लिङ्गव्यत्यय इति गाथार्थः, ॥ ३ ॥ आह—यद्याचारस्योपरि पठ्यमानत्वेनोत्तराण्यमूनि, तत्किं? यत एवा-
चारस्य प्रसूतिरेषामपि तत एव अभिधेयमपि यदेव तस्य तदेवोतान्यथेति? संशयापनोदायाह—

अंगप्पभवा जिणभासिया य पत्तेयबुद्धसंवाया । बंधे मुक्खे य कया छत्तीसं उत्तरज्झयणा ॥ ४ ॥ नि०

व्याख्या—अङ्गाद्-दृष्टिवादादेः प्रभव-उत्पत्तिरेषामिति अङ्गप्रभवानि, यथा परीषहाध्ययनं, वक्ष्यति हि—[1]"कम्मप्पवायपुव्वे स-
त्तरसे पाहुडंमि जं सुत्तं । सनयं सोदाहरणं तं चेव इहंपि णायव्वं ॥ १ ॥ " जिनभाषितानि यथा द्रुमपत्रपुष्पिकाध्ययनं, तद्धि
समुत्पन्नकेवलेन भगवता महावीरेण प्रणीतं, यद्वक्ष्यति— "[2]तंणिस्साए भगवं सीसाणं देइ अणुसट्ठिं"ति, 'चः' समुच्चये, प्रत्येकबु-

---

१ कर्मप्रवादपूर्वे सप्तदशे प्राभृते यत्सूत्रम् । सनयं सोदाहरणं तदेवेहापि ज्ञातव्यम् ॥ १ ॥ २ तन्निश्रया भगवान् शिष्येभ्यो ददात्यनुशास्तिम् ।

ञ्च संवादश्च प्रत्येकबुद्धसंवादं तस्मादुत्पन्नानीति शेषः तत्र प्रत्येकबुद्धाः-कपिलादयः तेभ्य उत्पन्नानि, यथा कापिलीयाध्ययन, वक्ष्यति हि—१ 'धम्मट्ठया गीयं' तत्र हि कपिलेनेति प्रक्रम, संवादः-मङ्गतप्रश्नोत्तरवचनरूपस्तत उत्पन्नानि, यथा—केशिगौतमीय, वक्ष्यति च २'गौतमकेसीओ य संवायसमुट्ठियं तु जम्हेयं'मित्यादि। ननु स्थविरविरचितान्येवैतानि, यत आह चूर्णिकृत्-३"थेराण अत्तागमो त्ति नन्द्यध्ययनेऽप्युक्तम्—'४जस्स जेत्तिया सीसा उप्पत्तियाए वेणइयाए कम्मयाए परिणामियाए चउव्विहाए बुद्धीए उववेया तस्स तेत्तियाइं पइण्णगसहस्साइं प्रकीर्णकानि चामूनि तत्कथं जिनदेशितत्वादि न विरुध्यते?, उच्यते, तथास्थितानामेव जिनादिवचसामिह दृब्धत्वेन तद्देशितत्वाद्युक्तमिति न विरोधः। बन्ध-आत्मकर्मणोरत्यन्तसंश्लेषस्तस्मिन्, मोक्ष तयोरेवाऽऽत्यन्तिक पृथग्भावस्तस्मिंश्च कृतानि, कोऽभिप्राय?-यथा बन्धो भवति यथा च मोक्षस्तथा प्रदर्शकानि, तत्र बन्धे यथा-५"आणाअणिद्देसकरेत्ति" मोक्षे यथा—६'आणाणिद्देसकरे त्ति आभ्यां यथाक्रममविनयो विनयश्च प्रदर्श्यते, तत्राविनयो मिथ्यात्वाद्यविनाभूतत्वेन बन्धस्य विनयश्चान्तरपोषकत्वेन मोक्षस्य कारणमिति तत्त्वतस्तौ यथा भवतस्तद्वैचोक्त भवति, मोक्षप्राधान्येऽपि बन्धस्य प्राग्युपादान मनादित्वोपदर्शनार्थं, यद्वा 'बंधे मोक्खे य' त्ति चशब्द एवकारार्थो भिन्नक्रमश्च, ततो बन्ध एव सति यो मोक्षस्तस्मिन् कृतानि, अनेनानादिमुक्तमतव्यवच्छेदश्च कृत, तत्र हि मोक्षशब्दार्थानुपपत्ति सकलानुष्ठानवैफल्यापत्तिश्च, किमेवं कतिचिदेव?, नेत्याह—'षट्त्रिंशत्' षट्त्रिंशत्संख्यानि, कोऽर्थ?-सर्वाणि उत्तराध्ययनानि इति गाथार्थः ॥ ४ ॥ इत्थं प्रसङ्गत उक्तरूप मध्ययनषट्त्र्याध्ययन निक्षेपं विनेयानुग्रहाय तत्पर्यायनिक्षेपातिदेश चाह—

---

१ धर्मार्थाय गीतम्। २ गौतमकेशीसंवादतश्च समुत्थितं तु यस्मादिदम्। ३ सूत्रे स्थविराणामात्मागम इति। ४ यस्य यावन्त शिष्या औत्पत्तिक्या वैनयिक्या कर्मजया पारिणामिक्या चतुर्विधया बुद्ध्योपेतास्तस्य तावन्ति प्रकीर्णकसहस्राणि। ५ आज्ञाऽनिर्देशकर। ६ आज्ञानिर्देशकर।

एमेव य अज्झीणे आयज्झवणेविय तहेव ॥ ५ ॥ नि०

नामं ठवणज्झयणे दव्वज्झयणे य भावअज्झयणे । एमेव य अज्झीणे आयज्झवणेविय तहेव ॥ ५ ॥ नि०

व्याख्या—'नामं ठवणज्झयणे'त्ति, प्रत्येकमध्ययनशब्दसम्बन्धान्नामाध्ययनं स्थापनाध्ययनं द्रव्याध्ययनं यस्य मिश्रकमत्वात् च पु-
भावाध्ययनं च, तत्र नामस्थापने गतार्थे, द्रव्याध्ययनमागमतो ज्ञातानुपयुक्तः, नोआगमतो ज्ञशरीरभव्यशरीरे तद्व्यतिरिक्तं
स्तकादिन्यस्तं, भावाध्ययनमागमतो ज्ञातोपयुक्तः, नोआगमतस्तु प्रस्तुताध्ययनान्येव, आगमैकदेशत्वादेषाम् । एवं चाक्षीणमायः
क्षपणाऽपि च तथैव कोऽर्थः ?,—अध्ययनवदेतान्यपि नामादिभेदभिन्नान्येव ज्ञेयानीति गाथार्थः ॥ ५ ॥ साम्प्रतं नामाध्ययनादीनि
त्रीणि प्रसिद्धान्येवेति मन्यमानो निर्युक्तिकारो निरुक्तिद्वारेण नोआगमतो भावाध्ययनं व्याख्यातुमाह—

अज्झप्पस्साणयणं कम्माणं अवचओ उवचियाणं । अणुवचओ व णवाणं तम्हा अज्झयणमिच्छंति ॥६॥ नि०

व्याख्या—'अज्झप्पस्स'त्ति, सूत्रत्वादध्यात्ममात्मनि, कोऽर्थः ?—स्वस्वभावे, आनीयतेऽनेनेति आनयनं प्रस्तावादात्मनोऽध्ययनं,
निरुक्तिविधिना चात्माकारनकारलोपः, कुत एतदित्याह—यतः 'कर्मणां'-ज्ञानावरणीयादीनाम् 'अपचयः'-चयापगमोऽभाव इत्यर्थः,
'उपचितानां'-प्राग्बद्धानाम् 'अनुपचयश्च'-अनुपचीयमानताऽनुपादानमितियावत्, 'नवानां'-प्रत्यग्राणां, कोऽर्थः ?—प्राग्बद्धानाम्, प-
तदुपयुक्तस्येति गम्यते, उपसंहारमाह-तस्मात् प्राग्बद्धबध्यमानकर्माभावेनाऽऽत्मनः स्वस्वभावानयनाद्धेतोः अध्ययनम् 'इच्छन्ति'-अ-
भ्युपगच्छन्ति, पूर्वसूरय इति गम्यते, यद्वाऽध्यात्ममिति रूढितो मनः, तच्च प्रस्तावात् शुभं, तस्याऽऽनयनमध्ययनम्, आनीयते आ-
नेन शुभं चेतः, अस्मिन् उपयुक्तस्य वैराग्यभावात्, शेषं प्राग्वत्, नवरं वैराग्यभावात् कर्मणामिति क्लिष्टानामिति गाथार्थः ॥ ६ ॥
निरुक्त्यन्तरेणैतदेव व्याख्यातुमाह—

अहिगम्मंति व अत्था अणेण अहियं व णयणमिच्छंति । अहियं व साहु गच्छइ तम्हा अज्झयणमिच्छंति ॥ ७ ॥

व्याख्या-- अधिगम्यन्त वा -परिच्छिद्यन्त वा 'अर्था'-जीवादयः अननाधिक वा नयने-प्रापणमर्थादात्मनि ज्ञानादीनामनेन इच्छन्ति, विद्वांस इति शेष, 'अधिगम्'-अर्गलं शीघ्रतरमितियावत्, 'वा'-सर्वत्र विकल्पार्थः 'साधु त्ति-साधयति पौरुषेयीमिविशिष्टक्रियाभिरपवर्गमिति साधु 'गच्छति'-यात्यर्थान्मुक्तिम्, अनेनेत्यत्रापि योज्यते, यस्मादेयमेव च नत किमित्याह—तस्मादध्ययनमिच्छन्ति, निरुक्तविधिनाऽर्थनिदर्शनपरत्वाद्वाऽस्य, अयतेरेतेर्वाऽधिपूर्वस्याध्ययनम्, इच्छन्तीति चाभिधान सर्वत्र सूत्रार्थाबाधया व्याख्याविकल्पाना पूर्वाचार्यसम्मतत्वेनादुष्टत्वख्यापनार्थमिति गाथार्थः ॥ ७ ॥ नामाक्षीणादित्रय प्रतीतमेवेति दृष्टान्तद्वारेण भावाक्षीणमाह-

जह दीवा दीवसयं पईप्पए सो य दीप्पए दीवो । दीवसमा आयरिया अप्पं च परं च दीवंति ॥ ८ ॥ नि०

व्याख्या--यथा दीपाद्दीपशतं 'प्रदीप्यते'-ज्वलति सोऽपि च दीप्यते दीपो, न पुनरन्यान्यदीपोत्पत्तावपि क्षीयते, तथा किमित्याह—दीपसमा आचार्या 'दीप्यन्ते'-समस्तशास्त्रार्थविनिश्चयेन स्वय प्रकाशन्ते 'पर च' शिष्य 'दीपयन्ति'-शास्त्रार्थप्रकाशनशक्तियुक्तं कुर्वन्ति, इह च 'तात्स्थ्यात् तद्व्यपदेश' इत्याचार्यशब्देन श्रुतज्ञानमेवोक्तं, भावाक्षीणस्य प्रस्तुतत्वात्तस्यैव चाक्षयत्वमन्वयादिति गाथार्थः ॥ ८ ॥ नामाऽऽयादयत्रय सुज्ञाना इति भावायं व्याचष्टे—

भावे पसत्थमियरो नाणाई कोहमाइओ कमसो । आउत्ति आगमुत्ति य लाभुत्ति य हुंति एगट्ठा ॥ ९ ॥

व्याख्या—'भावे'-विचार्ये इति शेषः, प्रशस्तः मुक्तिपदप्रापकत्वेन 'इतर'-अप्रशस्तो भवनिबन्धनत्वेन, प्रथमादायः, किंरूपः पुनरय द्विविधोऽपीत्याह—'ज्ञानादि'-आदिशब्दाद्दर्शनादिपरिग्रह, 'कोहमाइओ त्ति-मकारस्यालाक्षणिकत्वात् क्रोधादिकः, आदिशब्दान्मानादिपरिग्रह, 'कमसो'त्ति-आर्षत्वात् क्रमशः, किमुक्तं भवति?,—प्रशस्तो ज्ञानादि, अप्रशस्तः क्रोधादिः । इह च ज्ञानादेः, क्रोधादेश्च आयत्वमायविषयत्वाद्विषयविषयिणोरभेदोपचारेण अयते तमित्याय इति कर्मसाधनत्वेन वा, ज्ञानादिप्रशस्तभावायहेतुत्वा-

ध्ययनमपि भावाथः । 'तत्त्वभेदपर्यायैर्व्याख्ये'ति-पर्यायकथनमपि व्याख्याङ्गमिति पर्यायानाह—आय इत्यागम इति च लाभ इति
च भवन्त्येकार्थिकाः शब्दा इति गम्यते, इति प्रत्येकं पर्यायस्वरूपनिर्देशार्थः, 'चः'-समुच्चय इति गाथार्थः ॥ ९ ॥ नामस्थापनाक्षपणे
प्रसिद्धे इति द्रव्यक्षपणमाह—

पल्लत्थिया अपत्था तत्तो उप्पिट्टणा अपत्थयरी । निप्पीलणा अपत्था तिन्नि अपत्थाइ पुत्तीए ॥ १० ॥ नि०

व्याख्या-'पर्यस्तिका'-प्रसिद्धा 'अपथ्या'-अहिता, 'ततः'-इति पर्यस्तिकात उत्प्राबल्येन पिट्टना उत्पिट्टना-उत्पिट्टनकादिना
कुट्टनोत्पिट्टना अपथ्यतरा, 'निप्पीडना'-अत्यन्तमावलनात्मिका 'अपथ्या'-इति प्रस्तावादपथ्यतमा, सर्वत्र वस्त्रस्येति गम्यते, निग-
मयितुमाह—त्रीण्यपथ्यानि 'पोत्तीए'त्ति वस्त्रस्य, इह चाल्पाल्पतराल्पतमकालत आभिर्वस्त्रद्रव्यं क्षप्यत इति पर्यस्तिकादीनामपथ्या-
पथ्यतरापथ्यतमत्वं द्रव्यक्षपणत्वं चोक्तम्, अपथ्यानीति च निगमनं सामान्यस्याशेषविशेषसंग्राहकत्वाददुष्टमितिगाथार्थः ॥ १० ॥
भावक्षपणमाह—

अट्ठविहं कम्मरयं पोराणं जं खवेइ जोगेहिं । एयं भावज्झयणं णेयव्वं आणुपुव्वीए ॥ ११ ॥

व्याख्या—'अष्टविधम्'-अष्टप्रकारं, क्रियत इति कर्म्म-ज्ञानावरणादि, रज इव रजो जीवशुद्धस्वरूपान्यथात्वकरणेन, इह चो-
पमावाचकशब्दमन्तरेणापि परार्थप्रयुक्तत्वात् अग्निर्माणवक इतिवदुपमानार्थोऽवगन्तव्यः, कर्मरज इति समस्तं वा पदं, 'पुराणम्'-अ-
नेकभवोपात्तत्वेन चिरन्तनं 'यत्'-यस्मात् क्षपयति जन्तुः 'योगैः'-भावाध्ययनचिन्तनादिशुभव्यापारैः, तस्मादिदमेव भावरूपत्वात्
क्षपणाहेतुत्वाद्भावक्षपणेत्युच्यते इति प्रक्रमः । प्रकृतमुपसंहर्तुमाह—'एतद्'- इत्युक्तपर्यायाभिधेयं भावाध्ययनं 'नेतव्यं'-प्रापयितव्यम्
'आनुपूर्व्या'-शिष्यप्रशिष्यपरम्परात्मिकायां, यद्वा—'नेतव्यं'-संवेदनविषयतां प्रापणीयमानुपूर्व्या-क्रमेणेति गाथार्थः ॥ ११ ॥ तदित्थमु-
त्तराध्ययनानीति व्याख्यातम्, अधुना श्रुतस्कन्धयोर्निक्षेपं प्रत्यध्ययनं नामान्यर्थाधिकारांश्च वक्तुमवसर इति तदभिधानाय प्रतिज्ञामाह—

सुयखंधे निक्खेवं णामाइ चउव्विहं परूवेउ । णामाणि य अहिगारे अज्झयणाणं पवक्खामि ॥ १० ॥ नि०

व्याख्या—श्रुतं च स्कन्धश्चेति समाहारद्वन्द्वस्तस्मिन् निक्षेपं नामादयश्चत्वारो विधा—प्रकारा यस्य स तथा तं 'प्ररूप्य'-प्रतिपाद्य नामान्यधिकाराश्चाध्ययनानां प्रवक्ष्यामि इति गाथार्थः ॥ १२ ॥ इह च श्रुतस्कन्धनिक्षेपस्यान्यत्र सुप्रपञ्चितत्वात् प्रस्तावशाप मात्रेव श्रुतस्कन्धे निक्षेपं प्ररूप्येति निर्युक्तिकृतोक्तं, न तु प्ररूपयिष्यत इति । स्थानाशून्यार्थं किञ्चिदुच्यते-तत्र श्रुतं नामस्थापनात्मकं सुगमं, द्रव्यश्रुतं तु द्विविधम्—आगमनोआगमभेदात्, तत्र यस्य श्रुतमिति पदं शिक्षितादिगुणान्वितं ज्ञातं न च तत्रोपयोगः तस्य आगमतो द्रव्यश्रुतम्, 'अनुपयोगो द्रव्य मिति वचनात्, नोआगमतस्तु श्रुतपदार्थज्ञशरीरं भव्यशरीरं च भूतभाविपर्यायं, त द्व्यतिरिक्तं च पुस्तकादिन्यस्तम् अभिधीयमानं वा भावश्रुतहेतुतया द्रव्यश्रुतं, तथा चाह-"भूतस्य भाविनो वा भावस्य हि कारणं तु यल्लोके । तद् द्रव्यं तत्त्वज्ञैः सचेतनाचेतनं कथितम् ॥ १ ॥" भावश्रुतमप्यागमनोआगमभेदतो द्विधैव, तत्राऽऽगमत स्तज्ज्ञस्तत्र चोपयुक्तः, नोआगमतस्त्वेतान्येव प्रस्तुताध्ययनानि, आगमैकदेशत्वात् क्षायोपशमिकभाववृत्तित्वाच्चामीषामिति ॥ स्कन्धोऽपि नामस्थापनात्मकः प्रसिद्ध एव, द्रव्यस्कन्धः आगमतज्ज्ञोऽनुपयुक्तः नोआगमतो ज्ञशरीरभव्यशरीरे, तद्व्यतिरिक्तो द्रुम स्कन्धादिः भावस्कन्धस्तु आगमतस्तज्ज्ञस्तत्रोपयुक्तः नोआगमतः प्रक्रान्ताध्ययनसमूह इत्यलं प्रसङ्गेन ॥ प्रतिज्ञातमनुसरन्नामान्याह—

विणयसुयं[1] च[2] परीसह[2] चउरंगिज्जं[3] असंखयं[4] चेव । अकाममरणं[5] नियंठि[6] ओरब्भं[7] काविलिज्जं[8] च ॥ १३ ॥

णमिपव्वज्जा[9] दुमपत्तगं[10] च बहुसुयपुज्जं[11] नहेव हरिएस[12] । चित्तसंभूइ[13] उसुआरिज्जं[14] सभिक्खु[15] समाहिठाणं[16] च ॥१४॥

[17]पावसमणिज्जं तह [18]संजईज्जं [19]मियचारिया [20]नियंठिज्जं । [21]समुद्दपालिज्जं [22]रहनेमियं [23]केसिगोयमिज्जं च ॥ १५ ॥

[24]समिइओ [25]जन्नइज्जं [26]सामायारी तहा [27]खलुंकिज्जं । [28]मुक्खगइ [29]अप्पमाओ [30]तव [31]चरण [32]पमायठाणं च ॥ १६ ॥

[33]कम्मप्पयडी [34]लेसा बोद्धवे खलु [35]णगारमग्गे य । [36]जीवाजीवविभत्ती छत्तीसं उत्तरज्झयणा ॥ १७ ॥

व्याख्या—निगदसिद्धाः। नवरमाभिरध्ययनविशेषनामान्युक्तानि, एतन्निरुक्त्यादि च नामनिष्पन्ननिक्षेपप्रस्ताव एवाभिधास्यते॥

अधिकारानाह—

पढमे विणओ बीए परिसहा दुल्लहंगया तइए । अहिगारो य चउत्थे होइ पमायप्पमाए त्ति ॥ १८ ॥

मरणविभत्ती पुण पंचमम्मि विज्जा चरणं च छट्ठअज्झयणे । रसगेहिपरिच्चाओ सत्तमे अट्ठमि अलोभे ॥ १९ ॥

निक्कंपया य नवमे दसमे अणुसासणोवमा भणिया । इक्कारसमे पूया तवरिद्धी चेव बारसमे ॥ २० ॥

तेरसमे अ नियाणं अनियाणं चेव होइ चउदसमे । भिक्खुगुणा पन्नरसे सोलसमे बंभगुत्तीओ ॥ २१ ॥

पावाण वज्जणा खलु सत्तरसे भोगिड्ढिविजहणट्ठारे । एगुणि अप्परिकम्मे अणाहया चेव वीसइमे ॥ २२ ॥

चरिया य विचित्ता इक्कवीसि बावीसिमे थिरं चरणं । तेवीसइमे धम्मो चउवीसइमे य समिइओ ॥ २३ ॥

पंचगुणा पणवीसे भावणाओ य होइ छव्वीसे । सत्तावीसे अणगारा अट्ठावीसे य सुयगाई ॥ २४ ॥
गुणतीसं आयारपकप्पनामाओ नयो अ होइ तीसइमे । चरणं च इगतीसे पत्तीसि पमायठाणाइं ॥ २५ ॥
तेत्तीसइमे कम्मं चउतीसइमे य हुंति लेसाओ । भिक्खुगुणा पणतीसे जीवाजीवा य छत्तीसे ॥ २६ ॥

व्याख्या—आगमार्थं गुरुपागम एव, यथा विनयमूलोऽयं धर्मः, यत आगमः—"मूलाउ[1] खंधप्पभवो दुमस्स, खंधाउ पच्छा समुविंति साहा । साहप्पसाहा विरुहंति पत्ता, तओ उ२ पुप्फं च फलं रसो य ॥ १ ॥ एवं धम्मस्स विणओ मूलं परमो से मोक्खो । जेण कित्तिं सुयं सिग्घं नीसेसं चाभिगच्छई ॥ २ ॥" इत्यतः प्रथमाध्ययने विनयोऽभिहितः, विनयवतश्च तेषु तेषु गुरुनियोगेषु प्रवर्तमानस्य कदाचित् परीषहा उत्पद्येरन्, ते च सम्यक् सोढव्या इति द्वितीयाध्ययने परीषहा इत्यादि प्रसङ्गप्रयोजनमत्रापि, अध्ययनसम्बन्धाभिधानप्रस्तावे चाभिधास्यामः । उपसंहरन्नाह—

उत्तरज्झयणाणेसो पिंडत्थो वण्णिओ समासेणं । इत्तो इक्किक्कं पुण अज्झयणं कित्तइस्सामि ॥ २७ ॥

व्याख्या—उत्तराध्ययनानाम् 'एषः' अनन्तराभिहितस्वरूपः पिण्डार्थः' समुदायार्थः 'वर्णितः' उक्तः 'समासेन'–सङ्क्षेपेण, 'इत.' पिण्डार्थवर्णनाद्, अनन्तरमिति गम्यते, एकैकं 'पुनः'–विशेषे अध्ययनं 'कीर्तयिष्यामि'–व्याख्याद्वारेण संशब्दयिष्यामीति गाथार्थः ॥ २७ ॥ तत्र चाद्यं विनयश्रुतमिति तस्य कीर्तनावसरः, न च तद् उपक्रमाद्यनुयोगद्वारनिर्देशक्रमनिरूपणप्रयोजनप्रतिपादनमन्तरेण शक्यं

[1] मूलात् स्कन्धप्रभवो द्रुमस्य, स्कन्धात् पश्चात् समुपयन्ति शाखाः । शाखाभ्यः प्रशाखाः (ताभ्यः) विरोहन्ति पत्राणि ततस्तु पुष्पं च फलं रसश्च ॥ १ ॥ एवं धर्मस्य विनयो मूलं परमश्च मोक्षः । येन कीर्तिं श्रुतं शीघ्रं निःशेषं चाभिगच्छति ॥ २ ॥ इति

कीर्तयितुमिति मन्वानः प्रस्तुताध्ययनस्यानुयोगविधानक्रममर्थाधिकारं चाह—

**कीर्तयितुमिति मन्वानः प्रस्तुताध्ययनस्यानुयोगविधानक्रममर्थाधिकारं** ॥ २८ ॥

**तत्थऽज्झयणं पढमं विणयसुयं तस्सुवक्कमाईणि । दाराणि पन्न(रू)वेउं अहिगारो इत्थ विणएणं** ॥ २८ ॥

व्याख्या—'तत्र'-एतेष्वध्ययनेषु मध्ये अध्ययनं 'प्रथमम्'-आद्यं विनयाभिधानकं श्रुतं विनयश्रुतं मध्यपदलोपी समासः, 'तस्य'-इति विनयश्रुतस्य उपक्रमादीनि द्वाराणि 'प्ररूप्य'-तद्भेदनिरुक्तिक्रमप्रयोजनप्रतिपादनद्वारेण प्रज्ञाप्य, एतदनुयोगः कार्य इति शेषः, अधिकारश्चात्र विनयेन, तस्येहानेकधाऽभिधानात् । आह—'पढमे विणओ' इत्यनेनैवोक्तत्वात् पुनरुक्तमेतद्, उच्यते, शास्त्रपिण्डार्थविषयं तत्, एतच्च प्रस्तुतैकाध्ययनगोचरमिति न पौनरुक्त्यमिति गाथार्थः ॥ २८ ॥ अत्रापि 'प्ररूप्ये'त्यवसरज्ञापनार्थमेव निर्युक्तिकृतोक्तं, न तु प्ररूपयिष्यत इति, अनुयोगद्वारेषूक्तत्वात्, तदुक्तानुसारेण किञ्चिदुच्यते—इह चत्वार्यनुयोगद्वाराणि-उपक्रमो निक्षेपोऽनुगमो नयश्चेति, तद्भेदा यथाक्रमं द्वौ त्रयो द्वौ द्वौ चेति, निरुक्तिश्चैवम्—उपक्रमणं दूरस्थस्य सतो वस्तुनस्तैस्तैः प्रकारैः समीपानयनमुपक्रमः, नियतं निश्चितं वा नामादिसम्भवत्पक्षरचनात्मकं क्षेपणं-न्यसनं निक्षेपः, अनुरूपं सूत्रार्थाबाधया तदनुगुणं गमनं-संहितादिक्रमेण व्याख्यातुः प्रवर्तनमनुगमो, नयनम्—अनन्तधर्मात्मकस्य वस्तुनो नियतैकधर्मावलम्बेन प्रतीतौ प्रापणं नयः । क्रमप्रयोजनं च-नानुपूर्व्यादिभिर्न्यासदेशमनानीतं शास्त्रं निक्षेप्तुं शक्यं, न चौघनिष्पन्नादिभिर्निक्षेपैरनिक्षिप्तमनुगन्तुं, नापि सूत्राद्यनुगमेनाननुगतं नयैर्विचारयितुमित्ययमेवैषां क्रमः, तथा च पूज्याः—"[1]दारक्कमोऽयमेव उ निक्खिप्पइ जेण णासमीवत्थं । अणुगम्मइ णाणत्थं णाणुगमो णयमयविहूणो ॥ १ ॥ अत्र सङ्ग्रहश्लोकाः—'उपक्रमोऽथ निक्षेपोऽनुगमश्च नयाः क्रमात् । द्वाराण्येतानि भिद्यन्ते, द्वेधा त्रेधा द्विधा द्विधा ॥ १ ॥ उपक्रम उपक्रान्तिर्दूरस्थनिकटक्रिया । निक्षेपणं तु निक्षेपो, नामादिन्यसनात्मकः ॥ २ ॥ सूत्रस्या-

[1] द्वारक्रमोऽयमेव तु निक्षिप्यते येन नासमीपस्थम् । अनुगम्यते नान्यस्तं नानुगमो नयमतविहीनः ॥ १ ॥

नुगतिश्चिनाऽनुगमो नयनं नय. । अनन्तधर्मणोऽर्थस्यैकांशेनेति निरुक्तय ॥ ३ ॥ न्यासदेशागतं शास्त्रं, न्यस्यते न्यस्तमेव तत्। अन्वीयतेऽन्विते नीतिस्तेनैतेषामय क्रम ॥ ४ ॥' इत्थं विनेयस्मरणार्थं भेदनिरुक्तिक्रमप्रयोजनभाञ्जि द्वाराणि वर्णितानि, तद्वर्णनाच्च फलादीनि वाच्यानीति प्रतिज्ञात निर्वाहितम् । सम्प्रत्येभिरित्थं प्ररूपितैरेपामेव भेदप्रपञ्चनपुरस्सर प्रक्रान्ताध्ययनं विचार्यते, तत्रोप क्रमो द्विधा—लौकिको लोकोत्तरश्च, तत्राद्यो नामस्थापनाद्रव्यक्षेत्रकालभावभेदत पोढा, तत्र च नामतश्चिरतरकालभाविन सन्निहितकाल एवं करण नामोपक्रम, एवं स्थापनोपक्रमोऽपि, द्रव्योपक्रम. सचित्ताचित्तमिश्रभेदात् त्रिविध', प्रत्येकोऽपि[1] परिकर्मविनाशभेदतो द्विविध, उक्त च भाष्यकारेण-"[2]णामाई छब्भेओ उवक्कमो दव्वओ सचित्ताई। तिविहो दुविहो य पुणो परिकम्मे वत्थुनासे य ॥ १ ॥" तत्र परिकर्मणि सचित्तद्रव्योपक्रमोऽवस्थितस्यैव द्विपदचतुष्पदापदरूपस्य नरतुरगतरुप्रभृतिसचित्तवस्तुनोऽविवक्षिताचित्तकेशाद्यवयवस्य यथाक्रम रसायनशिक्षायुर्वेदादिवशत तथाविधकर्मोदयादे कालान्तरभाविनो वय स्थैर्यविनयनप्रसूनोद्गमादिपरिणतिविशेषस्यापादनम्, अचित्तद्रव्योपक्रम' कनकादेः कटकुण्डलादिक्रिया, मिश्रद्रव्योपक्रमः सचित्तस्यैव द्विपदादेः अचित्तकेशादिसहितस्य स्नानादि संस्कारकरणम्, एवं विनाशेऽपि द्रव्योपक्रमस्त्रिधा—तत्र सचित्तद्रव्योपक्रमोऽवस्थितस्यैव सचित्तद्रव्यस्याविवक्षितपर्यायान्तरोत्पत्ति प्रत्यमिज्ञानिवर्तकमसिप्रभ्वादित. प्राक्तनपर्यायापनयनम्, अचित्तद्रव्योपक्रम एवमेवाचित्तस्य रजतादे. पारदादिसम्पर्कात [2] स्वरूपादि- भ्रंशनं, मिश्रद्रव्योपक्रमोऽपि तथैव शृङ्खलाद्यलङ्कृतद्विरदादे. सचेतनस्य मुद्गरादिभिरभिघातः । एवं क्षेत्राद्युपक्रमा अपि परिकर्मविनाशभेदतो द्विभेदा', तत्र यद्यपि क्षेत्र नित्यममूर्तं च, ततो न तस्य परिकर्मविनाशौ स्तस्तथापि तदाधेयस्य जलादेर्नावा- दिहेतुकौ सम्भवत इत्युपचारतस्तदुपक्रम, उक्तं च—"[1] खित्तमरूवं णिच्चं ण तस्स परिकम्मणं ण य विणासो। आहेयगयवसेण

1 गोऽप्येक' परिकर्मविना ०प्र

2 नामादि' षड्भेद उपक्रमो द्रव्यत सचित्तादिः। त्रिविधो द्विविधश्च पुन परिकर्मणि वस्तुनाशे च ॥ १ ॥* २ क्षेत्रमरूप नित्य न तस्य परिकर्म न च विनाश । आधेयगतवशेनैव करणविनाशोपचारोऽत्र ॥ १ ॥ नावोपक्रमण हलकुलिकादिभिर्वाऽपि क्षेत्रस्य। समानितभूमिकर्म च पथितटाकादीनां च ॥ * स्वरूपाद् भ्रंशनं प्र०

उ करणविणासोवयारोऽत्थ ॥ १ ॥ णावाए उवक्कमणं हलकुलियाईहिं वावि खेत्तस्स । संमज्जभूमिकम्मे य पंथतलागाइयाणं च ॥ २ ॥"
ततस्तद्वारेण तस्य गुणविशेषाऽऽधान
काली १वर्तनादिरूपत्वेन द्रव्यपर्यायात्मक एव, द्रव्यपर्यायौ च नरसिंहवदन्योऽन्यसंवलितौ, तक्करणविणासे कीरइ कालोवयारो
विनाशावुपक्रमशब्दवाच्यौ, आह च—"जं २वत्तणादिरूवो कालो दव्वाण चेव पज्जाओ । तो कालोऽस्ति, यथोक्तम्—"सूरकिरिया-
उ ॥ १ ॥" आह—मनुष्यक्षेत्रे सूर्यक्रियाव्यङ्ग्यो वर्तनादिद्रव्यपरिणतिनिरपेक्षोऽद्धाकालाख्यः त्ति, तत्र का वार्ता?, उच्यते,
विसिट्ठो गोदोहादिकिरियासु निरवेक्खो । अद्धाकालो भण्णइ समयक्खेत्तंमि समयाई ॥ १ ॥" परिकर्मविनाशसम्भवादुपक्रमः, तथा च पूज्याः—
तस्यापि शंकुच्छायादिना यथावत् परिज्ञानत ऋक्षादिचारैरतिपाततश्चामूर्तत्वेऽपि विवज्जासो ॥ १ ॥" भावोपक्रमस्तु यद्यपि
"३छायाइ नालियाइ व परिकम्मं से अहत्थविन्नाणं । रिक्खाईचारेहि य तस्स विणासो तथापि जीवद्रव्यपर्यायोऽभिप्रायाख्यो भाव-
भावस्य पर्यायत्वात् तस्य च द्रव्यात् कथञ्चिदनन्यत्वात्तदुपक्रमाभिधानत उक्त एव, इति, ततस्तस्य परचित्तवर्तिनः संवेदनाविषयतया
शब्दाभिधेयोऽस्ति, यदुक्तम्—"भावाभिख्याः पञ्च स्वरूपसत्तात्मयोन्यभिप्रायाः" कुपितप्रसन्नतापादनं भावोपक्रम
विप्रकर्षवत इङ्गिताकारादिना परिज्ञानतः सन्निहितकरणं ज्ञातस्य वा तथाऽननुगुणानुगुणचित्रचेष्टातः उक्तं च—"४भण्णइ वक्खाणंगं
एव, स चावश्यमिहाभिधेयः, तदन्तर्गतत्वात् गुरुभावोपक्रमस्य, तस्य च सकलानुयोगप्रथमाङ्गत्वात्, को सेसोवक्कमोवयारोत्थ?। गुरु-
गुरुचित्तोवक्कमो पढमं" ति, शेषोपक्रमाणामपि चैतदङ्गत्वात्, तथा चाह—"५जुत्तं गुरुमयगहणं

१ वर्तमाना० प्र. २ यद्वर्तनादिरूपः कालो द्रव्याणामेव पर्यायः । ततस्तत्करणविनाशयोः क्रियते कालोपचारोऽत्र ॥ सूरक्रियाविशिष्टो गोदोहादिक्रियासु निरपेक्षः ।
अद्धाकालो भण्यते समयक्षेत्रे समयादिः ॥ १ ॥ ३ छायया नालिकया वा परिकर्म तस्य यथार्थविज्ञानम् । ऋक्षादिचारैश्च तस्य विनाशो विपर्यासः ॥ १ ॥
४ भण्यते व्याख्यानाङ्गं गुरुचित्तोपक्रमः प्रथमम् । ५युक्तं गुरुमतग्रहणं कः शेषोपक्रमोपचारोऽत्र । गुरुचित्तप्रसादार्थं तेऽपि यथायोगमायोज्याः ॥ १ ॥
परिकर्मनाशनाभ्यां देशे काले च ये यथा योग्याः । ततस्ते द्रव्यादीनां कार्या आहारादिकार्येषु ॥ २ ॥

त्तिमपमायत्थं तेऽवि जहाजोगमाजोज्जा ॥ १ ॥ परिकम्मणासणाओ देसे काले य जे जहा जोग्गा तो ते दव्वाईण कज्जाऽऽहाराइ वज्जेमु ॥ २ ॥ तत एतदभिधानाय द्रव्योपक्रमाद्भावोपक्रम पृथगुच्यते स च द्विविध -प्रशस्ताप्रशस्तभेदात्, तत्राप्रशस्तो ब्राह्मणी गणिकाऽमात्यादिगततोऽवसेय प्रशस्तश्च शिष्यस्य श्रुतादिहेतोर्गुरुभावोपक्रमन, यत आह—"[1]सीसो गुरुणो भावं जमुवक्कमए सुह पसत्थमणो । सहियत्थं स पसत्थो इह भावोवक्कमोऽहिगतो ॥ १ ॥ इत्युक्तो लौकिक उपक्रम, शास्त्रीयस्त्वानुपूर्वीनामप्रमाणवक्तव्यताऽर्थाधिकारसमवतारात्मक, तत्रानुपूर्वी नामादिदशप्रकारा अन्यत्र प्रपञ्चत उक्ता, इह पुनरुत्कीर्तनगणनात्मिकया तयाऽधिकार इति सैव भण्यते तत्रोत्कीर्तन विनयश्रुत परीषहाध्ययन चतुरङ्गीयमित्यादि संशब्दन, गणन सङ्ख्यान, तच्च पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वीभेदात्त्रिविध, तत्र पूर्वानुपूर्व्या गण्यमानमिदमध्ययन प्रथम, पश्चानुपूर्व्या षट्त्रिंशत्तमम्, अनानुपूर्व्या त्वस्यामेवैकाद्येकोत्तरया षट्त्रिंशद्गच्छगतया श्रेण्यामन्योऽन्याभ्यासतो द्विरूपोनसङ्ख्याभेद भवति, उक्त च-'एकाद्या गच्छपर्यन्ता, परस्परसमाहता । राशयस्तद्धि विज्ञेय, विकल्पगणिते फलम् ॥ १ ॥ इह चासम्मोहाय षट्पदाङ्गीकारत प्रस्तारानयनोपाय उच्यते-तत्र चैकादीनि षडन्तानि पद पदानि स्थाप्यन्ते, तानि चान्योऽन्य गुण्यन्ते, ततश्च जातानि सप्त शतानि विंशत्युत्तराणि, तेषां चान्येन षट्केन भागहार, तत्र लब्धं विंशत्युत्तर शत १२०, इयन्त षष्ठपङ्क्तौ षट्का न्यस्यन्ते, तदधस्तावन्त एव क्रमेण पञ्चकचतुष्कत्रिकद्विकैकका स्थाप्या, इत्थं जातानि षष्ठपङ्क्तौ सप्त शतानि विंशत्युत्तराणि । ततो विंशत्युत्तरशतस्य पञ्चकेन भागहार । तत्र च लब्धा चतुर्विंशति २४, तावत्संख्या पञ्चमपङ्क्तौ क्रमेण पञ्चकचतुष्कत्रिकद्विकैकका न्यस्या, जात विंशत्युत्तर शत, तस्य चाधस्तादग्रेतनपङ्क्तिस्थमङ्कम् पहाय यथा महत्सङ्ख्यमङ्कविन्यास । तत्राग्रेतनपङ्क्तिस्थ पञ्चकस्तत्परित्यागतश्च सर्ववृहत्सङ्ख्य षट्कश्चतुर्विंशतिवारानध स्थाप्यते, ततस्त्रिकापेक्षया चतुष्को द्विकापेक्षया च त्रिक एककापेक्षया च द्विको वृहत्सङ्ख्य तत एककश्च तावत एव वारान् न्यसनीय,

[1] शिष्यो गुरोर्भावं यदुपक्रमते शुभ प्रशस्तमना । स्वहितार्थं स प्रशस्त इह भावोपक्रमोऽधिकृत ॥ १ ॥

जातं पुनर्विंशत्युत्तरं शतम्, प्रथमाग्रेतनपंक्तिस्थचतुष्कत्रिकद्विकैकपरिहारतस्तथैव तावन्नेयं यावत्पञ्चमपंक्तावपि पूर्णानि सप्त शतानि विंशत्युत्तराणि । ततश्चतुर्विंशतेश्चतुष्केण भागहारः, तत्र लब्धाः षट् ६, ततश्चतुर्थपंक्तौ तावन्त एवाधोऽधश्चतुष्कत्रिकद्विकैकैककाः स्थाप्याः, यावज्जाता चतुर्विंशतिः, ततश्चाग्रेतनपंक्तिस्थाङ्कपरिहारादिप्रागुक्तयुक्तित एव पंक्तिः पूरणीया । भूयः षट्कस्य त्रिकेण भागहारः, ततश्च लब्धो द्विकः, ततस्तृतीयपंक्तौ द्वौ त्रिकौ पुनर्द्वावेव द्विकौ भूय एककौ च द्वावधः स्थापनीयौ, अधस्ताच्च पुरः स्थिताङ्कत्यागतो बृहत्सङ्ख्याङ्कन्यासतश्च विंशत्युत्तरसप्तशतप्रमाणैव पंक्तिः पूरणीया । षड्भागहारलब्धस्य द्विकस्य द्विकेन विभजने लब्ध एकः, ततो द्वितीयपंक्तौ द्विक एककश्चैको विरचनीयः, तदधश्च पुरोदितपुरस्थाङ्कपरिहारादिन्यायतस्तावत्सङ्ख्यैवं द्वितीयपंक्तिः कार्या । प्रथमपंक्तिस्तु पुरस्थाङ्कपरिहारतः पूरणीया । उक्तं च—"गणितेऽन्त्यविभक्ते तु, लब्धं शेषैर्विभाजयेत् । आदावन्ते च तत्स्थाप्यं, विकल्पगणिते क्रमात् ॥ १ ॥" इह च परस्परगुणनागतराशिर्गणितमुच्यते, शेषास्तु षट्कापेक्षया पञ्चकादयः, 'आदा' विति च षष्ठपंक्तौ, 'अन्त' इति च पञ्चमादिपंक्ताविति ॥

उक्ताऽऽनुपूर्वी, सम्प्रति नाम, तत्र नमति—ज्ञानरूपादिपर्यायभेदानुसारतो जीवपरमाण्वादिवस्तुप्रतिपादकतया प्रह्वीभवतीति नाम, तथा चाह—"[1]जं वत्थुणोऽभिहाणं पज्जवभेयाणुसारि तं नाम । पइभेयं जं णमए पइभेयं जाइ जं भणियं ॥ १ ॥" तच्चैकनामादि दशनामान्तम्, इह तु षड्विधनाम्नौदयिकादिषड्भावरूपेणाधिकारः, तदन्तर्भूतक्षायोपशमिकभावे श्रुतज्ञानात्मकत्वेन प्रस्तुताध्ययनस्यावतारात्, आह च—"[2]छव्विहनामे भावे खओवसमिए सुयं समोयरइ । जं सुयणाणावरणक्खओवसमजं तयं सव्वं ॥१॥" प्रमीयते-परिच्छिद्यतेऽनेनेति प्रमाणं, तच्च द्रव्यक्षेत्रकालभावभेदाच्चतुर्विधं, तत्रास्य क्षायोपशमिकभावरूपत्वेन भावप्रमाणेऽवतारः यत आह—"[1]दव्वाइ

१ यद्वस्तुनोऽभिधानं पर्यायभेदानुसारि तन्नाम । प्रतिभेदं यन्नमति प्रतिभेदं याति यद्भणितम् ॥ १ ॥ २ षड्विधनाम्नि भावे क्षायोपशमिके श्रुतं समवतरति यत् श्रुतज्ञानावरणक्षयोपशमजं तकत् सर्वम् ॥ १ ॥ द्रव्यादिचतुर्भेदं प्रमीयते येन तत्प्रमाणमिति । इदमध्ययनं भाव इति भावमाने समवतरति ॥ १ ॥

प्रथमपश्चिमपौरुष्योरेवैतत् पाठनियमात्, तत्रापि शब्दापेक्षया संख्येयाक्षरपा(प)दश्लोकाद्यात्मकतया
माणसंख्यायां, दिवा रात्रौ च प्रथमपश्चिमपौरुष्योरेवैतत् पाठनियमात्, अनन्तगमपर्यायत्वादागमस्य, तथा चाह—"१अणंता गमा
संख्यातपरिमाणात्मिकायां पर्यायापेक्षया त्वनन्तपरिमाणात्मिकायाम्, तत्र स्वसमयः—अर्हन्मतानुसारि-
अणंता पज्जवा" इत्यादि । वक्तव्यता-पदार्थविचारः, सा च स्वपरोभयसमयभेदतस्त्रिधा, तत्रास्य स्वसमयवक्तव्यताया-
शास्त्रात्मकः परसमयः-कपिलाद्यभिप्रायानुवर्तिग्रन्थस्वरूपः उभयसमयस्तूभयमतानुगतशास्त्रस्वभावः, परोभयसमययोरपि
मेवावतारः, स्वसमयपदार्थानामेवात्र वर्णनात्, यत्रापि परोभयसमयपदार्थवर्णनं तत्रापि स्वसमयवक्तव्यतैव, तदुक्तम्-"२परसमओ उभयं
सम्यग्दृष्टिपरिगृहीतत्वेन स्वसमयत्वात्, अत एव सर्वाध्ययनानामपि स्वसमयवक्तव्यतायामेवावतारः, अर्थाधिकारः 'पढमे विणओ' इत्यनेन
वा सम्मद्दिट्ठिस्स ससमओ जेणं । तो सव्वज्झयणाइं ससमयवत्तव्वनिययाइं ॥ १ ॥" ति । अर्थाधिकारस्तु 'अहिगारो इत्थ विणएणं'
स्वत एव निर्युक्तिकृताऽभिहित इति नोच्यते । इह च वक्तव्यता प्रतिसूत्राभिधेयार्थविषया, उक्तं च-"३अहुणा य समोयारो
मित्यनेनैवाभिहितः । समवतारस्त्वानुपूर्व्यादिषु लाघवार्थं यथासम्भवमुक्त एव इति न पुनरुच्यते, निक्षेपस्त्रिधा-ओघनिष्पन्नो नामनिष्पन्नः
जेण समोयारियं पइदारं । विणयसुयं सोऽणुगतो लाघवओ ण उण वच्चेत्ति ॥ १ ॥" ओहो नामं सुत्तं निक्खेयव्वं तओऽवस्सं ॥१॥"
सूत्रालापकनिष्पन्नश्च, आह च-"४भण्णइ घेप्पइ य सुहं णिक्खेवपयाणुसारओ सत्थं । अज्झयणं अज्झीणं आओ झवणा
ओघः अध्ययनादि सामान्यनाम, आह च—५ओहो जं सामन्नं सुयाभिहाणं चउव्विहं तं च । ॥ २ ॥ ३ अधुना च

१ अनन्ता गमा अनन्ताः पर्यवाः २ परसमय उभयं वा सम्यग्दृष्टेः स्वसमयो येन । ततः सर्वाण्यध्ययनानि स्वसमयवक्तव्यतानियतानि ॥ ३ ॥ ४ भण्यते गृह्यते च सुखं निक्षेपपदानुसारतः शास्त्रम् । ओघो
समवतारो येन समवतारितं प्रतिद्वारम् । विनयश्रुतं सोऽनुगतो लाघवतो न पुनर्वाच्य इति ॥ अध्ययनमक्षीणमायः क्षपणा च प्रत्येकम् ॥ ३० ॥ नामादि
नाम सूत्रं निक्षेप्तव्यं ततोऽवश्यम् ॥ ४ ॥ ५ ओघो यत् सामान्यं श्रुताभिधानं चतुर्विधं तच्च । येन शुभात्माध्ययनमध्यात्मानयनमभिक्कनयनं वा । बोधस्य संयमस्य च
चतुर्भेदं वर्णयित्वा श्रुतानुसारेण । विनयश्रुतमायोज्य चतुर्ष्वपि क्रमेण भावेषु ॥ ३१ ॥

य पत्तेयं १ ॥ णामादि चउब्भेय वण्णेऊण सुयाणुसारेण । विणयसुयं आउज्जं चउसुवि कमेण भावेसु ॥ २ ॥ जेण सुहप्प
झयणं अज्झप्पाणयणमहियणयणं वा । वोहस्स संजमस्स य मोक्खस्स य तो तमज्झयणं ॥ ३ ॥ अक्खीणं दिज्जतं अव्वोच्छि
त्तिणयतो अलोगो व्व । आओ णाणाईणं झवणा पावाण कम्माणं ॥ ४ । प्रकटार्था एव नवरं येन हेतुना शुभात्माध्ययनं शुभस्य-
पुण्यस्यात्मन्याधिक्येनायनं गमनं ततो भवति पठ्यते वा सुहमप्पयणं ति तत्र शुभ सङ्क्लेशाविरहितमध्यात्मं मन तत्रायन
मर्यादात्मन नन (अध्यात्मस्यानयन प्रापणमात्मनि ततो भवति) तथाऽधिक नयन प्रकर्षप्रापणं कस्य ?-बोधस्य तत्त्वाव
गमस्य संयमस्य वा पृथिव्यादिसंरक्षणात्मकस्य मोक्षस्य वा-कृत्स्नकर्मक्षयलक्षणस्य ततो भवति, आत्मनीति गम्यते 'तत' तस्मा
द्धेतो प्राग्वदध्ययनमुच्यत इति गाथ तथा अव्यवच्छित्तिनयत अव्यवच्छित्तिनयमाश्रित्य द्रव्यास्तिकनयाभिप्रायेणेत्यर्थ, 'अलोक
वत् इत्युपलक्षणत्वाद्लोकाकाशवदिति नामनिष्पन्ननिक्षेपेऽस्य विनयश्रुतमिति द्विपद नाम ततो विनयस्य श्रुतस्य च निक्षेप
शास्त्रान्तर उक्तोऽप्यवश्यमिह वक्तव्य । तत्र च विनयनिक्षेपो वह्वक्तव्य इति तमतिदेष्टुं श्रुतनिक्षेपस्तु न तथेति तमभिधातुमाह-

विणओ पुव्वुद्दिट्ठो सुयस्स चउक्कओ उ निक्खेवो । दव्वसुय निण्हगाइ भावसुय सुए उ उवउत्तो ॥ २९ ॥

व्याख्या—विनीयते अपनीयतेऽनेन कर्मेति विनय स च पूर्वं दशवैकालिकविनयसमाधिनामाध्ययने उद्दिष्ट-उक्त पूर्वोद्दिष्ट,
स्थानाशून्यार्थं तदुक्तमेव किञ्चिदुच्यते- [1]विणयस्स य [2]सुत्तस्स य णिक्खेवो होइ दुण्ह य चउक्को । दव्वविणयम्मि तिणिसो

मोक्षस्य वा ततस्तदध्ययनम् ॥ ३२ । अक्षीण दीयमानमव्यवच्छित्तिनयतोऽलोक इव । आयो ज्ञानादीनां क्षपणा पापानां कर्मणाम् । ३३ ॥ एतावतांऽपि
भाष्यवर्यनिर्युक्तिगाथा सोपयोगतया इति च संस्कृता ज्ञेया

[1] विनयस्य च श्रुतस्य च निक्षेपो द्वयोश्च चतुष्कको भवति । द्रव्य विनये तिनिश सुवर्णमिति एवमादिक ॥ १ ॥ [2] समाहीए इति द० अ० १

सुवण्णमिति ३एवमातीते ॥ १ ॥ ४लोकोवयारविणओ अत्थनिमित्तं च कामहेउं च । भयविणयमोक्खविणओ विणओ खलु पंचहा णेओ ॥ २ ॥ अब्भुट्ठाणं अंजलि आसणदाणं च अतिहिपूया य । लोगोवयारविणओ देवयपूया य विभवेणं ॥ ३ ॥ अब्भासवत्तिछंदाणुवत्तणा देसकालदाणं च । अब्भुट्ठाणं अंजलि आसणदाणं च अत्थकए ॥ ४ ॥ एमेव कामविणओ भए य णेयव्व आणुपुव्वीए । मोक्खंमिवि पंचविहो परूवणा तस्सिमा होइ ॥ ५ ॥ दंसणणाणचरित्ते तवे य तह ओवयारिए चेव । एसो य मोक्खविणओ पंचविहो होइ णायव्वो ॥ ६ ॥ दव्वाण सव्वभावा उवइट्ठा जे जहा जिणिंदेहिं । ते तह सद्दहइ नरो दंसणविणओ भवइ तम्हा ॥ ७ ॥ नाणं सिक्खइ नाणं गुणेइ नाणेण कुणइ किच्चाइं । णाणी णवं ण बंधइ णाणविणीओ हवइ तम्हा ॥ ८ ॥ अट्ठविहं कम्मचयं जम्हा रित्तं करेइ जयमाणो । णवमण्णं च न बंधइ चरित्तविणओ हवइ तम्हा ॥ ९ ॥ अवणेइ तवेण तमं उवणेइ य सग्गमोक्खमप्पाणं । तवनियमनिच्छियमई तवोविणओ हवइ तम्हा ॥ १० ॥ अह ओवयारिओ पुण दुविहो विणओ समासओ होइ । पडिरूवजोगजुंजण तहय अणासायणाविणओ ॥ ११ ॥ पडिरूवो खलु विणओ काइयजोगो य वायमाणसिओ । अट्ठचउव्विह-दुविहो परूवणा तस्सिमा होइ ॥ १२ ॥ अब्भुट्ठाणं अंजलि आसणदाणं अभिग्गह किती य । सुस्सूसण अणुगच्छण संसाहण काय अट्ठविहो ॥ १३ ॥ हियमियअफरुसवाई अणुवीईभास वाइओ विणओ । अकुसलमणोणिरोहो कुसलमणउदीरणा चेव ॥ १४ ॥ पडि-

---

३ सुवण्णमिच्चेवमाईणि द० अ० ९ नि० । ४ लोकोपचारविनयोऽर्थनिमित्तं च कामहेतोश्च । भयविनयो मोक्षविनयो विनयः खलु पञ्चधा ज्ञेयः ॥ २ ॥ अभ्युत्थानमञ्जलिरासनदानं चातिथिपूजा च । लोकोपचारविनयो देवतापूजा च विभवेन ॥ ३ ॥ अभ्यासवर्तिता छन्दोऽनुवर्तना देशकालदानं च । अभ्युत्थानमञ्जलिरासनदानं चार्थकृते ॥ ४ ॥ एवमेव कामविनयो भये च नेतव्य आनुपूर्व्या । मोक्षेऽपि पञ्चविधः प्ररूपणा तस्येयं भवति ॥ ५ ॥ दर्शनज्ञानचारित्रेषु तपसि च तथौपचारिके चैव । एष च मोक्षविनयः पञ्चविधो भवति ज्ञातव्यः ॥ ६ ॥ द्रव्याणां सर्वभावा उपदिष्टा ये यथा जिनेन्द्रैः । तांस्तथा श्रद्दधाति नरो दर्शनविनयो भवति तस्मात् ॥ ७ ॥ ज्ञानं शिक्षते ज्ञानं गुणयति ज्ञानेन करोति कृत्यानि । ज्ञानी नवं न बध्नाति ज्ञानविनीतो भवति तस्मात् ॥ ८ ॥ अष्टविधं कर्मचयं

रूवो खलु विणओ पराणुवित्तिमइओ मुणेयव्वो । अप्पडिरूवो विणओ णायव्वो केवलीण तु ॥ १५ ॥ एसो मे परिकहिओ विणओ पडिरूवलक्खणो तिविहो । बावन्नविहिविहाणं बिंति अणासायणाविणयं ॥ १६ ॥ तित्थयर १ सिद्ध २ कुल ३ गण ४ संघ ५ किरिय ६ धम्म ७ णाण ८ णाणीण ९ । आयरिय १० थेर ११ उवज्झाय १२ गणीणं १३ तेरस पयाइं ॥ १७ ॥ अणसायणा य भत्ती बहुमाणो वण्णसंजलणया य । तित्थयराई तेरस चउग्गुणा होंति बावन्ना ॥ १८ ॥" स्पष्टार्था, नवरं 'तिनिशो' वृक्षविशेषः, लोकोपचारविनयः लोकप्रतिफलं, अर्थनिमित्तं चेति, विनय इति गम्यते, ततोऽर्थप्राप्तिहेतोरीश्वराद्यनुवर्तनमर्थविनयः, कामहेतोश्चेति इहापि विनय इति प्रक्रमः ततश्च शब्दादिविषयसम्पत्तिनिमित्तं तथा तथा प्रवर्तनं कामविनयः, दुष्प्रधर्षनृपतिसामन्तादेः प्राणादिभयेनानुवर्तनं भयविनयः, इहलोकानपेक्षस्य श्रद्धानज्ञानशिक्षादिषु कर्मक्षयाय प्रवर्तनं मोक्षविनयः, स च दर्शनज्ञानचारित्रतपउपचारभेदात् पञ्चप्रकारः, तत्र चौपचारिकोऽनुरूपव्यापारसम्पादनानाशातनाभेदतो द्विभेदः, तत्र चाद्ये

---

यस्माद्रिक्तं करोति यतमानः । नवमन्यच्च न बध्नाति चारित्रविनयो भवति तस्मात् ॥ ९ ॥ अपनयति तपसा तमः उपनयति च स्वर्गमोक्षमात्मानम् । तपोनियमनिश्चितमतिस्तपोविनीतो भवति तस्मात् ॥ १० ॥ अथौपचारिकः पुनर्द्विविधो विनयः समासतो भवति । प्रतिरूपयोगयोजनं तथा च अनाशातनाविनयः ॥ ११ ॥ प्रतिरूपः खलु विनयः कायिकयोगश्च वाचिको मानसिकः । अष्टविधः चतुर्विधः द्विविधः प्ररूपणा तस्यैषा भवति ॥ १२ ॥ अभ्युत्थानमञ्जलिरासनदानमभिग्रह इतिकर्म च । शुश्रूषणमनुगमनं मसाधनं च विनयोऽष्टविधः ॥ १३ ॥ हितमितापरुषवादी अनुवीच्य भाषी वाचिको विनयः । अकुशलमनोनिरोधः कुशलमनउदीरणा चैव ॥ १४ ॥ प्रतिरूपः खलु विनयः परानुवृत्तिमयो मुणितव्यः । अप्रतिरूपो विनयो ज्ञातव्यः केवलिनां तु ॥ १५ ॥ एष भवद्भ्यः परिकथितो विनयः प्रतिरूपलक्षणस्त्रिविधः । द्वापञ्चाशद्विधिविधानं ब्रुवतेऽनाशातनाविनयम् ॥ १६ ॥ तीर्थकर १ सिद्ध २ कुल ३ गण ४ संघ ५ क्रिया ६ धर्म ७ ज्ञान ८ ज्ञानिनाम् ९ । आचार्य १० स्थविर ११ उपाध्याय १२ गणिनां १३ त्रयोदश पदानि ॥ १७ ॥ अनाशातना च भक्तिर्बहुमानो वर्णसंज्वलनता च । तीर्थकराद्यास्त्रयोदश चतुर्गुणा भवति द्विपञ्चाशत् ॥ १८ ॥

अभ्युत्थानम्-आगच्छति गच्छति च इष्टे गुरावासनमोचनम्, अभिग्रहो-गुरुविश्रामणादिनियमः, कृतिः-द्वादशावर्तादिवन्दनं,
शुश्रूषणं 'ण पक्खओ[1] ण पुरओ' इत्यादिविधिना गुरुवचनश्रवणेच्छा, पर्युपासनमित्यर्थः, अनुगमनम्-आगच्छतः प्रत्युद्गमनं,
संसाधनं-गच्छतः सम्यगनुव्रजनं, 'कुलं' नागेन्द्रादिः 'गणः' कोटिकादिः, 'क्रिया' अस्ति परलोकोऽस्त्यात्माऽस्ति च सकलक्लेश-
लेशाकलङ्कितं मुक्तिपदमित्यादिप्ररूपणात्मिकेह गृह्यते, 'धर्मः' श्रुतचारित्रात्मकः 'ज्ञानं' मत्यादि 'आचार्यः' अनुयोगाचार्यः 'गणी'
गणाचार्यः अनाशातना-मनोवाक्कायैरप्रतीपप्रवर्तनं, भक्तिः-अभ्युत्थानादिरूपा, बहुमानो मानसोऽत्यन्तप्रतिबन्धः, वर्णनं वर्णः-श्लाघनं
तेन संज्वलना-ज्ञानादिगुणोद्दीपना वर्णसंज्वलना ॥ [2]श्रुतस्य चत्वारः परिमाणमस्येति चतुष्कः, सङ्ख्याया अतिशदन्तायाः कन्निति
( पा० ५-१-२२ ) कन्, तुशब्दश्चतुर्विधनिक्षेपोऽवश्यं सर्वत्र वक्तव्य इति विशेषद्योतकः, उक्तं हि—"[3]जत्थ उ जं जाणेज्जा
णिक्खेवं णिक्खिवे निरवसेसं । जत्थवि[4] णवि जाणिज्जा चउक्कयं निक्खिवे तत्थ ॥ १ ॥" निक्षेपो-न्यासः, तत्राद्ययोः सुगमत्वा-
त्तृतीयमाह-द्रव्यतो द्रव्यरूपं वा श्रुतं द्रव्यश्रुतम्, आगमतो नोआगमतश्च, तत्रागमतो ज्ञाताऽनुपयुक्तः, नोआगमतस्त्वाह-निह्नुते-
आगमाभिहितमर्थमतिक्लिष्टकर्मोदयात् कुयुक्तिभिरपनयतीति निह्नवो-जमालिप्रभृतिः पश्चात्कृतश्रुतपरिणतिः, आदिशब्दात्पुरस्कृत-
श्रुतपरिणतिसत्त्वपरिग्रहः, भावश्रुतमप्यागमनोआगमभेदतो द्विधा, तत्रागमतोऽभिधातुमाह-भावतो भावरूपं वा श्रुतं भावश्रुतं,
प्राकृतत्वादिह पूर्वत्र च विन्दुलोपः 'श्रुते' श्रुतविषये, 'तुः' अवधारणे भिन्नक्रमः, तत उपयुक्त एव, कोऽर्थः-यस्य श्रुतमिति पदं
ज्ञातं तत्र चोपयोगः स भावश्रुतं, तदुपयोगानन्यत्वाद्, अभ्युपयुक्तमाणवकाग्निवदिति गाथार्थः ॥ २९ ॥ उक्तओघनामनिष्पन्न
निक्षेपौ, सम्प्रति सूत्रालापकनिष्पन्ननिक्षेपः प्राप्तावसरः, तथापि स नोच्यते, यतः सति सूत्रेऽसौ सम्भवति, सूत्रं च सूत्रानुगमे,

1 न पक्षतो न पुरतः । 2 अथ एकोनत्रिंशत्तमनिर्युक्तिगाथोपात्तस्य 'सुयस्स चउक्कओ उ निक्खेवो' इत्यस्य व्याख्या. 3 यत्र तु यं जानीयात् निक्षेपं निक्षिपेन्निरवशेषम् । यत्रापि नापि जानीयात् चतुष्कं निक्षिपेत् तत्र । १ । 4 'जत्थवि य न जाणिज्जा' इत्यनुयोगद्वारेषु ।

स चानुगमभेद इति अनुगम एव तावदुपवर्ण्यते-द्विविधोऽनुगम —निर्युक्त्यनुगम सूत्रानुगमश्च, तत्राद्यो निक्षेपनिर्युक्ति उपोद्‌घात-निर्युक्तिसूत्रस्पर्शिकनिर्युक्त्यनुगमविधानस्त्रिविध, तत्र च निक्षेपनिर्युक्त्यनुगम उक्तादिनिक्षेपप्रतिपादनादनुगत एव, उपोद्‌घात निर्युक्त्यनुगमस्तु द्वारगाथाद्वयादवसेय, तच्चेदम्—"[1]उद्देसे णिद्देसे य णिग्गमे खेत काल पुरिसे य । कारण पच्चय लक्खण णए समोयारणाणुमए ॥ १ ॥ किं कइविह कस्स कहिं केसु कह केच्चिर हवइ काल ? । कइ संतरमविरहिय भवागरिस फासण णिरुत्ती ॥ २ ॥' एतदर्थं सामायिकनिर्युक्तितोऽवसेय, सूत्रस्पर्शिकनिर्युक्त्यनुगमस्तु सूत्रावयवव्याख्यानरूपत्वात् सूत्रस्पर्शिक निर्युक्ति सति सूत्रे सम्भवति, तच्च सूत्रानुगम एवेति तत्रैव वक्ष्यते । नन्वेवमस्थानमिदमस्येति कस्मादिहोद्देश ?, उच्यते, निर्युक्त्यनुगमभावसामान्यात्, तदुक्तम्-"[2]सपइ सुतप्फासियनिज्जुत्ती ज सुयस्स वक्खाणं । तीसेऽवसरो सो पुण पत्तावि ण भण्णए इहई ॥ १ ॥ किं जेणासइ सुत्ते कस्स तई त जया कमप्पत्तो । सुत्ताणुगमो वोच्छ होही तीसे तया भावो ॥ २ ॥ अत्थाणमिय तीसे जइ तो सा कीस भण्णई इहय ? । सा भण्णइ निज्जुत्तीमेत्तसामण्णओ नवर ॥ ३ ॥" साम्प्रत सूत्रानुगम, तत्रालीकोपघातजनकत्वादिदोषरहित निर्दोषसारत्वा (वत्वा) दिगुणान्वित सूत्रमुच्चारणीय, तच्चेदम्—

**संजोगा विप्पमुक्कस्स अणगारस्स भिक्खुणो । विणयं पाउकरिस्सामि आणुपुव्विं सुणेह मे ॥१॥ सू०**

---

1 उद्देशो निर्देशश्च निर्गम क्षेत्रं काल पुरुषश्च । कारण प्रत्ययो लक्षणं नय समवतारणाऽनुमतम् ॥ १ ॥ किं कतिविधं कस्य क केषु कथं कियच्चिर भवति कालम् । कतिसान्तरमविरहितं भवाकर्षा स्पर्शना निरुक्ति ॥ २ ॥

2 सम्प्रति सूत्रस्पर्शकनिर्युक्तिर्यत् श्रुतस्य व्याख्यानम् । तस्या अवसर सा पुन प्राप्तापि न भण्यते इह ॥ १ ॥ किं ? येनासति सूत्र कस्य सका तस्मात् यदा क्रमप्राप्त सूत्रानुगमो वक्ष्यते तदा भविष्यति तस्या भाव ॥ २ ॥ अस्थानमिदं तस्या यदि तदा सा किं भण्यतेऽत्र । सा भण्यते निर्युक्तिमात्रसामान्यतो नवरम् ॥३॥

पच्छा तेण खुड्डग-पडि पुत्त ! एस पाणियं पियाहि, सोऽवि खतो नई उत्तिण्णो चिंतेति य-मणागं ओसरामि, 'जाथेस खुड्डओ पाणिय पियइ, मा मे संकाए न पाहिति एगते एडिज्जइ, जाव खुड्डतो एतो णइ ण पियति, थेर भणति-अंजलीए उक्खित्ताए थइ से चिता जाया-पियामित्ति, पच्छा चिंतेइ-कहमहं एए हालाहले जीवे पिविस्सं ?, ण पीयं, थासाए छिण्णाए कालगतो, देवेसु उववण्णो, ओहिं पउत्तो, जाव खुड्डगसरीर पासति, तहिं अणुपविट्ठो, खतं ओलग्गति, खंतोऽवि पतित्ति पत्थितो, पच्छा तेण तेसिं देवेण साहूणं गोउलाणि विउव्वियाणि, साहूवि तासु वइयासु तक्काईणि गिण्हन्ति, एवं वइयापरंपरेण जाव अणवयं संपत्ता, पच्छिल्लाए वइयाए तेण देवेण विंटिया पम्हुसाविया जाणणनिमित्तं, एगो साहू णियत्तो, पेच्छति विंटियं, णत्थि वइया, पच्छा तेहिं णाय-सादिव्वति, पच्छा तेण देवेण साहुणो वंदिया, खतो न वंदिओ तओ सव्वं परिकहेइ, भणइ-एएण अहं 'परिचत्तो-तुमं ण पाणिय पियाहित्ति, जदि मे त पाणियं पियं होन्तं तो संसारं भमतो, पडिगतो। एवं अहियासेयव्वं। इत्यवसित पिपासापरीषह, क्षुत्पिपासासहनकर्शितशरीरस्य च नितरां शीतकाले शीतसम्भव इति तत्परीषहमाह—

चरंतं विरयं लूहं, सीयं फुसइ एगया। नाइवेलं विहन्निज्जा, पावदिट्ठी विहन्नइ ॥ ६ ॥ (सूत्रम्)

१ यावदेष क्षुल्लक पानीय पिबति, मा मम शङ्कया न पास्यतीति एकान्ते प्रतीक्षते, यावत्क्षुल्लक प्राप्त नदीं, न पिबति, केचिद्भणन्ति-अञ्जल्युत्क्षिप्तायां तस्य चिन्ता जाता-पिबामीति, पश्चात् चिन्तयति-कथमहमेतान् हालाहलान् जीवान् पास्ये ?, न पीतम्, आशायां छिन्नायां कालगत, देवेषूत्पन्न, अवधि प्रयुक्त, यावत् क्षुल्लकशरीरं पश्यति, तथानुप्रविष्ट, वृद्धमवलगति, वृद्धोऽपि एतीति प्रस्थित, पश्चात्तेन देवेन तेभ्य साधुभ्यो गोकुलानि विकुर्वितानि, साधवोऽपि तासु व्रजिकासु तक्रादीनि गृह्णन्ति, एव व्रजिकापरम्परकैव यावज्जनपदं सम्प्राप्ता, पश्चिमायां व्रजिकायां तेन देवेन विण्टिका विस्मारिता ज्ञाननिमित्तम्, एक साधुर्निवृत्त, पश्यति विण्टिकां, नास्ति व्रजिका, पश्चात्तैर्ज्ञातं-सादिव्यमिति पश्चात् तेन देवेन साधवो वन्दिता, ततः सर्वं परिकथयति, भणति-एतेनाह ।२ परित्यक्त-त्वमिदं पानीयं पिबेति, यदि मया तत्पानीयं पीतमभविष्यत्तदा संसारमभ्रमिष्यम्, प्रतिगत, एवमध्यासितव्यम् ।

व्याख्या—'चरन्तम्' इति ग्रामानुग्रामं मुक्तिपथं वा व्रजन्तं, धर्ममासेवमानं वा, 'विरतम्' अग्निसमारम्भादेर्निवृत्तं विगतरतं वा 'लूहं'ति स्नानस्निग्धभोजनादिपरिहारेण रूक्षं, किमित्याह—शृणाति इति शीतं, 'स्पृशति' अभिद्रवति, चरदादिविशेषणविशिष्टो हि सुतरां शीतेन बाध्यते, 'एकदे'ति शीतकालादौ प्रतिमाप्रतिपत्त्यादौ वा, ततः किम्?—'न' नैव वेला-सीमा मर्यादा सेतुरित्यनर्थान्तरं, तत्क्षातीति शेषसमयेभ्यः [1]स्थविरकल्पिकापेक्षया जिनकल्पिकापेक्षया च स्थविरकल्पाद्यातिशायिनी वेला शक्त्यपेक्षतया च सर्वथानपेक्षतया च शीतसहनलक्षणा मर्यादा तां विहन्यात्, कोऽर्थः—अपध्यानस्थानान्तरसर्पणादिभिरतिक्रामेत्, किमेवमुपदिश्यत इत्याह—पासयति पातयति वा भवावर्ते इति पापा तादृशी दृष्टिः-बुद्धिरस्येति पापदृष्टिः 'विहन्नइ' इति सूत्रत्वाद्विहन्ति-अतिक्रामत्यतिवेलामिति प्रक्रमः; अयमत्र भावार्थः-पापदृष्टिरेवोक्तरूपमर्यादातिक्रमकारी, ततः पापबुद्धिकृतत्वादस्यसद्बुद्धिभिः परिहारो विधेयः, पठ्यते च—'नाइवेलं मुणी गच्छ, सुच्चा णं जिणसासणं' तत्र वेला-स्वाध्यायादिसमयात्मिका तामतिक्रम्य शीतेनाभिहतोऽहमिति 'मुनिः' तपस्वी न 'गच्छेत्' स्थानान्तरमभिसर्पेत्, 'सोच्चे'ति श्रुत्वा णमिति वाक्यालङ्कारे 'जिनशासनं' जिनागमम्-अन्यो जीवोऽन्यश्च देहस्तीव्रतराश्च नरकादिषु शीतवेदनाः प्राणिभिरनुभूतपूर्वा इत्यादिकमिति सूत्रार्थः ॥ ६ ॥ अन्यच्च—

**ण मे णिवारणं अत्थि, छवित्ताणं न विज्जइ । अहं तु अग्गिं सेवामि, इह भिक्खू न चिंतए ॥ ७ ॥**

व्याख्या—न 'मे' मम नितरां वार्यते-निषिध्यतेऽनेन शीतवातादीति निवारणं-सौधादि 'अस्ति' विद्यते, तथा छविः-त्वक् त्रायते-शीतादिभ्यो रक्ष्यतेऽनेनेति छवित्राणं-वस्त्रकम्बलादि न विद्यते, वृद्धास्तु निवारणं-वस्त्रादि तथा छविः-त्वक् त्राणं न विद्यते-न भवति, असौ हि शीतोष्णादीनां ग्राहिकेति व्याचक्षते, अतः 'अह'मित्यात्मनिर्देशः तुः पुनरर्थः, तद्भावना च येषां निवा-

[1] नेदं पदद्वयं प्रत्यन्तरे.

पच्छा तेण खुड्डए-वहि पुत्त ! इम पाणियं पियाहि, सोऽवि खतो नइ उत्तिण्णो चिंतेति य-मणाग ओसरामि, 'जाहेस खुड्डओ पाणियं पियइ, मा मे लज्जाए न पाहिति एगते पडिच्छइ, जाव खुड्डतो पत्तो णई ण पियति, केइ भणंति-अजलीए उक्खित्ताए मह से चिंता जाया पियामित्ति, पच्छा चितेइ-कहमहं एए हालाहले जीवे पिविस्सं ?, ण पीयं, आसाए छिन्नाए कालगतो, देवेसु उववण्णो, ओहिं पउंजो, जाव खुड्डगसरीरं पासति तहिं अणुपविट्ठो, खत ओलग्गति, खतोऽवि पत्तिति पत्थितो, पच्छा तेण तेसिं देवेण साहुण गोउलाणि विउव्वियाणि, साहुवि तासु वइयासु तक्काईणि गिण्हन्ति, एव वइयापरंपरेण जाव जणवयं संपत्ता, पच्छिमाए वइयाए तेण देवेण विंटिया पम्हुसाविया जाणणनिमित्त, एगो साहू णियत्तो, पेच्छति विंटियं, णत्थि वइया, पच्छा तेहि णाय-साहिव्वति, पच्छा तेण देवेण साहुणो वंदिया, खतो न वंदिओ तओ सव्व परिकहेइ, भणइ-एएण अहं 'परिचत्तो- तुमं णं पाणियं पियाहित्ति, जदि से न पाणियं पिय होन्त तो संसार भमंतो, पडिगतो। एवं अहियासेयव्व। इत्यवसित पिपासापरीषह', क्षुत्पिपासामहनकर्शितशरीरस्य च नितरां शीतकाले शीतसम्भव इति तत्परीषहमाह—

चरंतं विरयं लूहं, सीयं फुसइ एगया। नाइवेलं विहन्निज्जा, पावदिट्ठी विहन्नइ ॥ ६ ॥ (सूत्रम्)

1 यावदेष क्षुल्लकः पानीयं पिबति, मा मम शङ्कया न पास्यतीति एकान्ते प्रतीक्षते, यावत्क्षुल्लकः प्राप्तः नदीं, न पिबति, केचिद्भणन्ति-अञ्जलिमुत्क्षिप्य तस्य चिन्ता जाता-पिबामीति, पश्चात् चिन्तयति-कथमहमेतान् हालाहलान् जीवान् पास्ये ?, न पीतम्, आशायां छिन्नायां कालगत, देवेषूत्पन्न, अवधिः प्रयुक्त, यावत् क्षुल्लकशरीरं पश्यति, तत्रानुप्रविष्ट, क्षुल्लकमवलगति, क्षुल्लकोऽपि गच्छति प्रस्थित, पश्चात्तेन देवेन तेभ्य साधुभ्यो गोकुलानि विकुर्वितानि, साधवोऽपि तासु व्रजिकासु तक्रादीनि गृह्णन्ति, एवं व्रजिकापरम्परकेण यावज्जनपदं संप्राप्ता, पश्चिमायां व्रजिकाया तेन देवेन विण्टिका विस्मारिता ज्ञाननिमित्तम्, एकः साधुर्निवृत्त, पश्यति विण्टिकां, नास्ति व्रजिका, पश्चाज्ज्ञातं-साहाय्यमिति, पश्चात् तेन देवेन साधवो वन्दिताः, क्षुल्लको न वन्दितः, ततः सर्वं परिकथयति, भणति-एतेनाहं । 2 परित्यक्त-त्वमिदं पानीयं पिबेति, यदि मया तत्पानीयं पीतमभविष्यत्तदा संसारमभ्रमिष्यम्, प्रतिगत, एवमध्यासितव्यम् ।

भ्यासे तस्स नगरुण्हाए न तहा सीअं तेण पच्छा कालगतो, ते सम्मं कालगया, एवं सम्मं अहियासियव्वं जहा तेहिं चउहिं अहियासियं ॥ इदानीं शीतविपक्षभूतमुष्णमिति यदिवा शीतकाले शीतं तदनन्तरं ग्रीष्मे उष्णमिति तत्परीषहमाह—

**उसिणपरितावेण, परिदाहेण तज्जिओ। घिंसु वा परितावेणं, सायं ण परिदेवए ॥ ८ ॥ सूत्रम् ॥**

व्याख्या—उष्णम्-उष्णस्पर्शवत् भूशिलादि तेन परितापः तेन, तथा 'परिदाहेन' बहिः स्वेदमलाभ्यां वह्निना वा अन्तश्च तृष्णया जनितदाहस्वरूपेण 'तर्जितः' भर्त्सितोऽत्यन्तपीडित इतियावत्, तथा 'ग्रीष्मे' वाशब्दात् शरदि वा 'परितापेन' रविकिरणादि जनितेन तर्जित इति सम्बन्धः, किमित्याह—'सातं' सुखं, प्रतीति शेषः, न परिदेवेत्, किमुक्तं भवति?—'नारीकुचोरुकरपल्लवोपगूढैः क्वचित्सुखं प्राप्ताः। क्वचिदङ्गारैर्ज्वलितैस्तीक्ष्णैः पक्वाः स्म नरकेषु ॥ १ ॥' इत्यादि परिभावयन् हा! कथं मम मन्दभाग्यस्य सुखं स्यादिति प्रलपेत्, यद्वा-'सात'मिति सातहेतुं प्रति, यथा हा! कथं कदा वा शीतकालः शीतांशुकरकलापादयो वा मम सुखोत्पादकाः सम्पत्स्यन्त इति न परिदेवेतेति सूत्रार्थः ॥ ८ ॥ उपदेशान्तरमाह—

**उण्हाहितत्तो मेहावी, सिणाणं नाभिपत्थए। गायं न परिसिंचेज्जा य अप्पयं ॥ ९ ॥ (सूत्रम्)**

व्याख्या—'उष्णाभितप्तः' उष्णेनात्यन्तं पीडितो 'मेधावी' मर्यादानतिवर्ती 'स्नानं' शौचं देशसर्वभेदभिन्नं 'नाभिप्रार्थयेत्' नैवाभिलषेत्, पठन्ति च-'णोऽवि पत्थए'त्ति अपेर्भिन्नक्रमत्वात् प्रार्थयेदपि न, किं पुनः कुर्यादिति?' तथा 'गात्रं' शरीरं 'न परिषिञ्चेत्' न सूक्ष्मोदकबिन्दुभिरार्द्रीकुर्यात्, 'न वीजयेच्च' तालवृन्तादिना 'अप्पयं'ति आत्मानम्, अथवाऽल्पमेवाल्पकं, किं पुनर्बह्विति सूत्रार्थः ॥९॥ साम्प्रतं शिलाद्वारमनुस्मरन् 'उसिणपरितावेणे-' त्यादिसूत्रावयवसूचितमुदाहरणमाह-

---

कालगतः, तेषां यो नगराभ्यासे तस्य नगरोष्मणा न तथा शीतं तेन पश्चात्कालगतः, ते सम्यक् कालगताः, एवं सम्यगध्यासितव्यं यथा तैश्चतुर्भिरध्यासितम्।

र्णं छयित्राण वा समस्ति ते किमिति अग्निं सेवेयु ?, अहं तु तदभावादत्राण, तत्किमन्यत्करोमीत्यग्निं सेवे 'इति'स्येवं भिक्षुः' यतिः 'न चिन्तयेत्' न ध्यायेत्, चिन्तानिषेधे च सेवनं दूरापास्तमिति सूत्रार्थः ॥ ७ ॥ इदानीं लयनद्वारं, तत्र च 'नातिवे मुनिर्गच्छदि'त्यादिसूत्रावयवसूचितं दृष्टान्तमाह—

रायगिहंमि वयंसा सीसा चउरो उ भद्दबाहुस्स । वेभारगिरिगुहाए सियपरिगया समाहिगया ॥९१॥

व्याख्या—राजगृहे नगरे वयस्याः शिष्याश्चत्वारस्तु भद्रबाहोर्वैभारगिरिगुहायां शीतपरिगता समाधिगता इत्यक्षरार्थः ॥९१॥ भावार्थस्तु वृद्धविवरणादवसेयः, तच्चेदम्—

'रायगिहे णयरे चत्तारि वयंसा वाणियगा सहवड्ढियया, ते भद्दबाहुस्स अंतिए धम्मं सोच्चा पव्वइया, ते सुयं बहुं अहिज्जिता अन्नया कयाइ एगल्लविहारपडिमं पडिवन्ना, ते समायरंतीए विहरंता पुणोवि रायगिहं नयरं संपत्ता, हेमंतो य वट्टति, ते य भिक्खं काउं तइयाए पोरिसीए पडिनियत्ता, तेसिं च वेभारगिरिंतेणं गंतव्वं, तत्थ पढमस्स गिरिगुहादारे चरिमा पोरिसी ओगाढा, सो तत्थेव ठिओ, बितियस्स उज्जाणे, ततियस्स उज्जाणसमीवे, चउत्थस्स नगरब्भासे चेव, तत्थ जो गिरिगुहब्भासे तस्स निरागं सीयं सो भयवं सहतो खमंतो य पढमजामे चेव कालगतो, एवं [2]जो नगरसमीवे सो चउत्थे जामे कालगतो, तेसिं जो नगर-

[1] राजगृहे नगरे चत्वारो वयस्या वणिजः सहवृद्धाः, ते भद्रबाहोरन्तिके धर्मं श्रुत्वा प्रव्रजिताः, ते श्रुतं बह्वधीय अन्यदा कदाचित् एकाकिविहारप्रतिमां प्रतिपन्नाः, ते समाचरन्तः (भविनव्यतया) विहरन्तः पुनरपि राजगृहं नगरं संप्राप्ताः, हेमन्तश्च वर्तते, ते च भिक्षां कृत्वा तृतीयायां पौरुष्यां प्रतिनिवृत्ताः, तेषां च वैभारगिरिमार्गेण गन्तव्यं, तत्र प्रथमस्य गिरिगुहाद्वारे चरमा पौरुष्यवगाढा, स तत्रैव स्थितः, द्वितीयस्योद्याने, तृतीयस्योद्यानसमीपे, चतुर्थस्य नगराभ्यासे चैव, तत्र यो गिरिगुहाभ्यासे तस्य निरन्तरायं शीतं स सम्यक् सहमानः क्षममाणश्च प्रथमयाम एव कालगतः, एवं । [2] यो नगरसमीपे स चतुर्थे यामे

सग्गिज्जंतो य पडिभग्गो भोगे भुंजति । सो साहूहिं सव्वहिं मग्गितो ण दिट्ठो अप्पसागारियं पविट्ठो, पच्छा से माया उम्मत्तिया जाया पुत्तसोगेण, णयरं परिभमंती अरहन्नयं विलवंती जं जहिं पासइ 'तं तहिं सव्वं भणति-अत्थि ते कोइ 'अरहन्नओ दिट्ठो ?, एवं विलवमाणी भमइ, जाव अन्नया तेण पुत्तेण ओलोयणगएण दिट्ठा, पच्चभिन्नाया, तहेव ओयरित्ता पाएसु पडिओ, तं पिच्छिऊण तहेव सत्थचित्ता जाया, ताहे भण्णइ-पुत्त ! पव्वयाहि, मा दुग्गइं जाहिसि, सो भणइ-न तरामि काउं संजमं, जदि परं अणसणं करेमि, एवं करेहि, मा य असंजओ भवाहि, मा संसारं भमिहिसि, पच्छा सो तहेव तत्ताए सिलाए पाओवगमणं करेइ, मुहुत्तेण सुकुमालसरीरो उण्हेण विलाओ, पुव्विं तेण नाहियासिओ पच्छा तेणऽहियासितो । एवं अहियासियव्वं ॥ उष्णं च ग्रीष्मे तदनन्तरं वर्षासमयः, तत्र च दंशमशकसम्भव इति तत्परीषहमाह—

**पुट्ठो य दंसमसएहिं, समरे व महामुणी । नागो संगामसीसे व, सूरे अभिभवे परं ॥ १० ॥ ( सूत्रम् )**

व्याख्या—'स्पृष्टः' अभिद्रुत 'चः' पूरणे दंशमशकैः, उपलक्षणत्वात् यूकादिभिश्च' समरे व'त्ति 'पदोदुरलोपा विसर्जनीयस्ये'ति रेफात्, ततः सम एव-तद्गणनया स्पृष्टास्पृष्टावस्थयोस्तुल्य एव, यद्वा समन्तादरयः-शत्रवो यस्मिंस्तत्समरं तस्मिन्निति संग्रामशिरोविशेषणं, वेति पूरणे, 'महामुनिः' प्रशस्तयतिः, किमित्याह—'णागो संगामसीसे वे'ति इवार्थस्य वाशब्दस्य भिन्नक्रमत्वा-

---

१ तं तत्र सर्वं भणति-अस्ति म कोऽपि (येन) अर्हन्नको दृष्टः, एवं विलपन्ती भ्राम्यति, यावदन्यदा तेन पुत्रेण अवलोकनगतेन दृष्टा, प्रत्यभिज्ञाता, तथैवोत्तीर्य पादयोः पतितः, तं प्रेक्ष्य तथैव स्वस्थचित्ता जाता, तदा भण्यते-पुत्र ! प्रव्रज, मा दुर्गतिं यासीः, स भणति-न शक्नोमि कर्त्तुं संयमं, यदि परमनशनं करोमि, एवं कुरु, मा चासंयतो भूः, मा संसारं भ्रमीः, पश्चात्स तथैव तप्तायां शिलायां पादपोपगमनं करोति, मुहूर्त्तेन सुकुमालशरीर उष्णेन विलीनः, पूर्वं तेन नाध्यासितः पश्चात्तेनाध्यासितः । एवमध्यासितव्यम् ।

**तगराइ अरिहमित्तो दत्तो अरहन्नओ य भद्दा य। वणियमहिल चइत्ता तत्तंमि सिलायले विहरे ॥९२॥**

व्याख्या—तगरायामर्हन्मित्रो दत्तोऽर्हन्नकश्च भद्रा च वणिग्महेलां त्यक्त्वा तप्ते शिलातले 'विहरेत्' व्यहार्षीदिति गाथाक्षरार्थः ॥ ९२ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेय, स चायम्—

[1]तगरा नयरी, तत्थ अरिहमित्तो नाम आयरिओ, तस्स समीवे दत्तो नाम वाणियओ भद्दाए भारियाए पुत्तेण य [2]अरहन्नएण सद्धिं पव्वइओ, सो तं खुड्डगं ण कयाइ भिक्खाए हिंडावेइ, पढमालियाईहिं किंचिच्छएहिं पोसेति, सो सुकुमालो, साहूण अप्पत्तियं, ण तरंति किंचि भणिउं। अन्नया सो खंतो कालगतो, साहूहिं दो तिन्नि वा दिवसे दाउं भिक्खस्स ओयारिओ, सो सुकुमालसरीरो गिम्हे उवरिं हिट्ठा य डज्झति पासे य, तिण्हाभिभूतो छायाए वीसमंतो पउत्थवतियाए वणियमहिलाए दिट्ठो, ओरालसुकुमालसरीरोत्तिकाउ तीसे तहिं अज्झोववाओ जाओ, चेडीए सद्दावितो, किं मग्गसि?, भिक्खं, दिण्णा से मोयगा, पुच्छितो—कीस तुमं धम्मं करेसि?, भणइ—सुहनिमित्तं, सा भणइ—तो मए चेव समं भोगे भुंजाहि, सो य उण्हेण तज्जिओ उव-

1 तगरा नगरी, तत्रार्हन्मित्रनामा आचार्य, तस्य समीपे दत्तो नाम वणिक् भद्रया भार्यया पुत्रेण। 2 चार्हन्नकेन सार्धं प्रव्रजित, स तं क्षुल्लकं न कदाचित् भिक्षायै हिण्डयति, प्रथमालिकादिभि किंचिच्छकै पोषयति, स सुकुमाल, साधूनामप्रीतिक, न तरन्ति किंचिद्वक्तुम्। अन्यदा स वृद्ध कालगत, साधुभि द्वौ त्रीन् वा दिवसान् दत्त्वा भिक्षायायवतारित, स सुकुमालशरीरो ग्रीष्मे उपरि अधस्ताच्च दह्यते पार्श्वयोश्च, तृष्णाभिभूतश्छायायां विश्राम्यन् प्रोषितपतिकया वणिग्महेलया दृष्ट, उदारसुकुमालशरीर इतिकृत्वा तस्यास्तत्राध्युपपातो जात, चेट्या शब्दित, किं मार्गयसि?, भिक्षां, दत्तास्तस्मै मोदका, पृष्ट—कथं त्वं धर्मं करोषि?, भणति—सुखनिमित्तं, सा भणति—तदा मयैव समं भोगान् भुङ्क्ष्व, स चोष्णेन तर्जित उपसर्गमाणश्च प्रतिभग्नो भोगान् भुनक्ति। स साधुभि सर्वत्र मार्गित न दृष्टोऽल्पसागारिक प्रविष्ट, पश्चात्तस्य मातोन्मत्ता जाता पुत्रशोकेन, नगरे परिभ्राम्यन्ती अर्हन्नक विलपन्ती च यत्र पश्यति

व्याख्या—चम्पायां सुमनोभद्रो युवराजो धर्मघोषशिष्यश्च पथि मशकपरिपीतशोणितः सोऽपि कालगत इति गाथाक्षरार्थः ॥ ९३ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

[1]चंपाए नयरीए जियसत्तुस्स रण्णो पुत्तो सुमणभद्दो जुवराया, धम्मघोसस्स अन्तिए धम्मं सोऊण निव्विण्णकामभोगो पव्वइतो, ताहे चेव एगल्लविहारपडिमं पडिवन्नो, पच्छा हेट्ठाभूमीए विहरन्तो सरयकाले अडवीए पडिमागतो [2]रत्ति मसएहिं खज्जइ, सो ते ण पमज्जइ, सम्मं सहइ, रत्तीए पीयसोणितो कालगतो। एवं अहियालेयव्वं ॥ इत्यवसितो दंशमशकपरीषहः ॥ अधुना अचेलः संस्तैस्तुद्यमानो वस्त्रकम्बलाद्यन्वेषणपरो न स्यादित्यचेलपरीषहमाह—

परिजुन्नेहि वत्थेहिं, होक्खामित्ति अचेलए। अदुवा सचेलए होक्खं, इइ भिक्खु न चिंतए ॥ १२ ॥

व्याख्या—'परिजीर्णैः' समन्तात् हानिमुपगतैः 'वस्त्रैः' शाटकादिभिः 'होक्खामित्ति' इतिर्भिन्नक्रमः ततो भविष्यामि 'अचेलकः' चेलविकलः अल्पदिनभावित्वादेषामिति भिक्षुर्न विचिन्तयेत्, अथवा 'सचेलकः' चेलान्वितो भविष्यामि, परिजीर्णवस्त्रं हि मां दृष्ट्वा कश्चित् श्राद्धः सुन्दरतराणि वस्त्राणि दास्यतीति भिक्षुर्न चिन्तयेत्, इदमुक्तं भवति–जीर्णवस्त्रः सन्न मम प्राक्परिगृहीतमपरं वस्त्रमस्ति न च तथाविधो दातेति न दैन्यं गच्छेत्, न चान्यलाभसम्भावनया प्रमुदितमानसो भवेदिति सूत्रार्थः ॥ १२ ॥ इत्थं जीर्णादिवस्त्रतया अचेलं स्थविरकल्पिकमाश्रित्याचेलपरीषह उक्तः, सम्प्रति तमेव सामान्येनाह—

---

१ चम्पायां नगर्यां जितशत्रो राज्ञः पुत्रः सुमनोभद्रो युवराजः, धर्मघोषस्यान्तिके धर्मं श्रुत्वा निर्विण्णकामभोगः प्रव्रजितः, तदैव एकाकिविहारप्रतिमां प्रतिपन्नः, पश्चादधोभूमौ विहरन् शरत्कालेऽटव्यां प्रतिमागतः

२ रात्रौ मशकैः खाद्यते, स तान् न प्रमार्जयति, सम्यक् सहते, रात्रौ पीतशोणितः कालगतः। एवमध्यासितव्यम्।

भाग इव-हस्तीव समासन्न शिर इव शिर-प्रकर्षावस्था संग्रामशिरस्तस्मिन् 'शूर' पराक्रमवान्, यद्वा शूरो-योध ततोऽन्तर्भावितोपमार्थत्वाद्गम्यमानत्वात् शरपद्धाऽभिहन्यात्, कोऽर्थः ?-अभिभवेत् 'पर' शत्रुम्, अयमभिप्राय-यथा शूरः करी पदा यथा वा योध शरैस्तुद्यमानोऽपि तदगणनया रणशिरसि शत्रून् जयति, एवमयमपि दंशादिभिरभिद्रूयमानोऽपि भावशत्रु-क्रोधादिकं जयेदिति सूत्रार्थ ॥ १० ॥ यथा च भावशत्रुर्जेतव्यस्तथोपदेष्टुमाह—

ण संतसे ण वारिज्जा, मणंपि णो पउस्सए। उवेहे नो हणे पाणे, भुंजंते मंससोणिए ॥ ११ ॥ (सूत्रम्)

व्याख्या—'न सन्त्रसेत्' नोद्विजेत्, दंशादिभ्य इति गम्यते, यद्वाऽनेकार्थत्वाद्धातूना न कम्पयेत्तैस्तुद्यमानोऽपि, अङ्गानीति शेष, 'न निवारयेत्' न निषेधयेत्, प्रभ्रमादत्वादीनेव तुदतो, मा भूदन्तराय इति, मन-चित्त तदपि, आस्ता वचनादि, 'न प्रदूषयेत्' न प्रदुष्टं कुर्यात्, किन्तु 'उवेहे' त्ति उपेक्षेत-औदासीन्येन पश्येद्, अत एव न हन्यात् 'प्राणान्' प्राणिनो 'भुञ्जानान्' आहारयतो मांसशोणितम्, अत्राभिप्राय-अत्यन्तबाधकेष्वपि दंशकादिषु शृगालवृककृतेष्व, नदद्भिर्घोरनिर्घुरम्। आक्षेपत्रोटितस्नायु, भक्ष्यन्ते रुधिरोक्षिता: ॥ १ ॥ स्कन्धैः श्यामशबलैर्धवलपुच्छैर्भयान्वितै । विनिष्क्रान्तशिखिजिह्वाभा, विचेष्टन्ते महीतले ॥ ३ ॥ परस्पर निरुध्यद्भिर्विलुप्यन्ते दिशोदिशम् ॥ २ ॥ काकगृध्रादिकैश्च, लोहतुण्डैर्बलान्वितै । विनिष्क्रान्तशिखिजिह्वाभा, विचेष्टन्ते महीतले ॥ ३ ॥ प्राणोपक्रमणैर्घोरैर्दुःखैरेवंविधैरपि । आयुष्यक्षपितेनैव, म्रियन्ते दुःखभागिन: ॥ ४ ॥ इत्यादि, तथा असंक्लिष्टा एते आहारार्थिनश्च भोज्यमेतेषा मच्छरीरं बहुसाधारणं च यदि भक्षयन्ति किमत्र प्रद्वेषेणेति च विचिन्तयन् तदुपक्षणपरो न तदुपघात निदध्यादिति सूत्रार्थ ॥ ११ ॥ इदानीं पथिद्वार, तत्र स्पृष्टो वेनामशकै रित्यादिसूत्रसूचितमुदाहरणमाह—

चंपाए सुमणुभद्दो जुवराया धम्मघोससीसो य। पंथंमि मसगपरिपीयसोणिओ सोऽवि कालगओ ॥ ०३ ॥

न चास्यासिद्धत्वं, तद्धि तस्य तदनिमित्ततया स्यात्, सा च तत्रास्य बाधाविधायितयौदासीन्येन वा ?, न तावद्बाधाविधायितया, यतोऽसौ पञ्चमव्रतविघातकत्वेन संसक्तिविषयतया कषायकारणत्वेन वा ?, यदि पञ्चमव्रतविघातकत्वेन, तदपि कुतः ? युक्तित इति चेत्, नन्वियं स्वतन्त्रा सिद्धान्ताधीना वा ?, यदि स्वतन्त्रा ततः सलोमा मण्डूकश्चतुष्पात्त्वे, सत्युत्प्लुत्य गमनात्, मृगवत्, अलोमा वा हरिणः, चतुष्पात्त्वे सत्युत्प्लुत्य गमनात्, मण्डूकवदित्यादिवन्न निर्मूलयुक्तेः साध्यसाधकत्वम्, उक्तं हि—"यत्नेनानुमितोऽप्यर्थः, कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १ ॥" सिद्धान्ताधीनयुक्तिस्तु तथाविधसिद्धान्ताभावादसम्भविनी, अथास्त्यसौ 'गामे वा नगरे वा अप्पं वा बहुं वा जाव नो परिगिण्हेज्जा' इत्यादिः, तदनुगृहीता युक्तिश्च—यद्यत्परिग्रहस्वरूपं तत्तदुपादीयमानं पञ्चमव्रतविघाति, यथा धनधान्यादि, परिग्रहस्वरूपं च चीवरमिति, नन्वसिद्धोऽयं हेतुः, तथाहि—परिग्रहस्वरूपत्वमस्य किं मूर्च्छाहेतुत्वेन धारणादिमात्रेण वा ?, यदि मूर्च्छाहेतुत्वेन, शरीरमपि मूर्च्छाया हेतुर्न वा ?, न तावदहेतुः, तस्यान्तरङ्गत्वेन दुर्लभतरतया च विशेषतस्तद्धेतुत्वाद्, उक्तं च—"[1]अह कुणसि थुल्लवत्थाइएसु मुच्छं धुवं सरीरेऽवि। अकेज्जदुलभतरे काहिसि मुच्छं विसेसेण ॥ १ ॥" अथास्तु [2]तन्निमित्तमेतत्, तर्हि चीवरवत्तस्यापि किं दुस्त्यजत्वेन मुक्त्यङ्गतया वा न प्रथमत एव परिहारः ?, दुस्त्यजत्वेन चेत् तदपि किमशेषपुरुषाणामुत केषाञ्चिदेव ?, न तावदशेषपुरुषाणां, दृश्यन्ते हि बहवो वह्निप्रवेशादिभिः शरीरं परित्यजन्तः, अथ केषाञ्चित्, तदा वस्त्रमपि केषाञ्चित् दुस्त्यजमिति तदपि न परिहार्यं, मुक्त्यङ्गतापक्षाश्रयणे च किं चीवरेणापराद्धम् ?, तस्यापि तथाविधशक्तिविकलानां शीतकालादिषु स्वाध्यायाद्युपष्टम्भकत्वेन मुक्त्यङ्गत्वाद्, अभ्युपगम्य च मूर्च्छाहेतुत्वमुच्यते—न हि निगृहीतात्मनां क्वचिन्मूर्च्छाऽस्ति, तदुक्तम्—"[3]सव्वत्थुवहिणा बुद्धा, संरक्खणपरिग्गहे। अवि अप्प-

---

१ अथ करोषि स्थूलवस्त्रादिषु मूर्च्छां ध्रुवं शरीरेऽपि। अक्रेयदुर्लभतरे करिष्यसि मूर्च्छां विशेषेण ॥ १ ॥ २ मूर्च्छाहेतुः शरीरं ३ सर्वत्रोपधिना बुद्धाः, संरक्षणपरिग्रहे। अपिनात्मनोऽपि देहे नाचरन्ति ममायितम् ( तम् ) ॥ १ ॥

एगया अचेलए होइ, सचेले यावि एगया। एयं धम्महियं णच्चा, नाणी णो परिदेवए॥ १३ ॥ (सूत्रम्)

व्याख्या—'एकदा' एकस्मिन् काले जिनकल्पप्रतिपत्तौ स्थविरकल्पेऽपि दुर्लभवस्त्रादौ वा सर्वथा चेलाभावेन सति वा चेले विना वर्षादिनिमित्तमप्रावरणेन जीर्णादिवस्त्रतया वा 'अचेलक' इति अवस्त्रोऽपि भवति, पठ्यते च 'अचेलए सय होइ'त्ति तत्र स्वयम्-आत्मनैव न पराभियोगत, 'सचेल' सवस्त्रश्चाप्येकदा स्थविरकल्पिकत्वे तथाविधालम्बनेनावरणे सति, यद्येवं ततः किमित्याह—'एतदि'त्यवस्थौचित्येन सचेलत्वमचेलत्वं च धर्मो-यतिधर्म्म, तस्मै हितम्-उपकारकं धर्महितं 'ज्ञात्वा' अवबुद्ध्य, तत्राचेलकत्वस्य धर्महितत्वमल्पप्रत्युपेक्षादिभि, यथोक्तम्—"[1]पचहिं ठाणेहिं पुरिमपच्छिमाणं अरहन्ताण भगवताणं अचेलए पसत्थे भवइ, त जहा-अप्पा पडिलेहा १, वेसासिए रूवे २, तवे अणुमए ३, लाघवे पसत्थे ४, विउले इंदियनिग्गहे ५"त्ति, सचेलत्वस्य तु धर्मोपकारित्वमग्न्याद्यारम्भनिवारकत्वेन संयमफलत्वात्, 'ज्ञानी' नैवा एव प्रायस्तिर्थप्रारका तद्वधभयादेव च मया सन्त्यपि वासांस्यपास्यन्त इत्येवं बोधवान् नो परिदेवयेत्, किमुक्तं भवति?-अचेल सन् किमिदानीं शीतादिपीडितस्य मम शरणमिति न दैन्यमालम्बेत इति सूत्रार्थ ॥ १३ ॥ इह च केचिन्मिथ्यात्वाकुलितचेतस इदमित्थं महार्थकर्मप्रवादपूर्वोद्धृतमस्तुताध्ययनाधीतमपि सचेलत्वं तथा-सम्यक्त्वज्ञानशीलानि, तपश्चेतीह सिद्धये। तेषामुपग्रहार्थाय, स्मृतं चीवरधारणम् ॥ १ ॥ जटी कूर्ची शिखी मुण्डी, चीवरी नग्न एव च। तप्यन्नपि तप कष्टं, मौढ्याद्धिंस्रो न सिद्ध्यति ॥ २ ॥ सम्यग्ज्ञानी दयावांस्तु, ध्यानी यस्तप्यते तप नग्न-चीवरधारी वा, स सिद्ध्यति महामुनिः ॥ ३ ॥ इति वाचकवचनानूदितं चानुचितमित्याहु, तान् प्रति वक्तुमुपक्रम्यते-इह यो यदर्थी न स तन्निमित्तोपादानं प्रत्यनादृतो, यथा घटार्थी मृत्पिण्डोपादानं प्रति, चारित्रार्थिनश्च यतयस्तन्निमित्तं च चीवरमिति,

[1] पञ्चभि स्थानैः पूर्वपश्चिमयोरर्हतोर्भगवतोरचेलकत्वं प्रशस्तं भवति, तद्यथा-अल्पा प्रत्युपेक्षा १ वैश्वासिक रूपं २ तपोऽनुमतं ३ लाघवं प्रशस्त • विपुल इन्द्रियनिग्रह ५

न चास्यासिद्धत्वं, तद्धि तस्य तदनिमित्ततया स्यात्, सा च तत्रास्य बाधाविधायितयोदासीन्येन वा ?, न तावद्बाधाविधायितया, यतोऽसौ पञ्चमव्रतविघातकत्वेन संसक्तिविषयतया कषायकारणत्वेन वा ?, यदि पञ्चमव्रतविघातकत्वेन, तदपि कुतः ? युक्तित इति चेत्, नन्वियं स्वतन्त्रा सिद्धान्ताधीना वा ?, यदि स्वतन्त्रा ततः सलोमा मण्डूकश्चतुष्पात्त्वे, सत्युत्प्लुत्य गमनात्, मृगवत्, अलोमा वा हरिणः, चतुष्पात्त्वे सत्युत्प्लुत्य गमनात्, मण्डूकवदित्यादिवन्न निर्मूलयुक्तेः साध्यसाधकत्वम्, उक्तं हि—"यत्नेनानुमितोऽप्यर्थः, कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १ ॥" सिद्धान्ताधीनयुक्तिस्तु तथाविधसिद्धान्ताभावादसम्भविनी, अथास्त्यसौ 'गामे वा नगरे वा अप्पं वा बहुं वा जाव नो परिगिण्हेज्जा' इत्यादिः, तदनुगृहीता युक्तिश्च—यद्यत्परिग्रहस्वरूपं तत्तदुपादीयमानं पञ्चमव्रतविघाति, यथा धनधान्यादि, परिग्रहस्वरूपं च चीवरमिति, नन्वसिद्धोऽयं हेतुः, तथाहि—परिग्रहस्वरूपत्वमस्य किं मूर्च्छाहेतुत्वेन धारणादिमात्रेण वा ?, यदि मूर्च्छाहेतुत्वेन, शरीरमपि मूर्च्छाया हेतुर्न वा ?, न तावदहेतुः, तस्यान्तरङ्गत्वेन दुर्लभतरतया च विशेषतस्तद्धेतुत्वाद्, उक्तं च—"[1]अह कुणसि थुल्लवत्थाइएसु मुच्छं धुवं सरीरेऽवि। अक्केज्जदुल्लभतरे काहिसि मुच्छं विसेसेण ॥ १ ॥" अथास्तु [2]तन्निमित्तमेतत्, तर्हि चीवरवत्तस्यापि किं दुस्त्यजत्वेन मुक्त्यङ्गतया वा न प्रथमत एव परिहारः ?, दुस्त्यजत्वेन चेत् तदपि किमशेषपुरुषाणामुत केषाञ्चिदेव ?, न तावदशेषपुरुषाणां, दृश्यन्ते हि बहवो वह्निप्रवेशादिभिः शरीरं परित्यजन्तः, अथ केषाञ्चित्, तदा वस्त्रमपि केषाञ्चित् दुस्त्यजमिति तदपि न परिहार्यं, मुक्त्यङ्गतापक्षाश्रयणे च किं चीवरेणापराद्धम् ?, तस्यापि तथाविधशक्तिविकलानां शीतकालादिषु स्वाध्यायाद्युपष्टम्भकत्वेन मुक्त्यङ्गत्वाद्, अभ्युपगम्य च मूर्च्छाहेतुत्वमुच्यते—न हि निगृहीतात्मनां क्वचिन्मूर्च्छाऽस्ति, तदुक्तम्—"[3]सव्वत्थुवहिणा बुद्धा, संरक्खणपरिग्गहे। अवि अप्प-

---

१ अथ करोषि स्थूलवस्त्रादिषु मूर्च्छां ध्रुवं शरीरेऽपि। अक्रेयदुर्लभतरे करिष्यसि मूर्च्छां विशेषेण ॥ १ ॥ २ मूर्च्छाहेतुः शरीरं ३ सर्वत्रोपधिना बुद्धाः, संरक्षणपरिग्रहे। अपिन्नात्मनोऽपि देहे नाचरन्ति ममायितुम् (तम्) ॥ १ ॥

एगया अचेलए होइ, सचेले यावि एगया । एयं धम्महियं णच्चा, नाणी णो परिदेवए ॥ १३ ॥ (सूत्रम्)

व्याख्या—'एकदा' एकस्मिन् काले जिनकल्पप्रतिपत्तौ स्थविरकल्पेऽपि दुर्लभवस्त्रादौ वा सर्वथा चेलाभावेन सति वा चेले विना वर्षादिनिमित्तमप्रावरणेन जीर्णादिवस्त्रतया वा 'अचेलक' इति अवस्त्रोऽपि भवति, पठ्यते च 'अचेलए सय होइ'त्ति तत्र स्वयम्-आत्मनैव न पराभियोगत, 'सचेल सवस्त्रश्चाप्येकदा स्थविरकल्पिकत्वे तथाविधालम्बनेनावरणे सति, यद्येवं ततः किमित्याह—'एतदि'त्यवस्थौचित्येन सचेलत्वमचेलत्व च धर्मो-यतिधर्म तस्मै हितम्-उपकारक धर्महितं 'ज्ञात्वा' अवबुद्ध्य, तत्राचेलकत्वस्य धर्महितत्वमल्पप्रत्युपेक्षादिभि, यथोक्तम्—"[1]पचहिं ठाणेहिं पुरिमपच्छिमाण अरहन्ताण भगवंताण अचेलए पसत्थे भवइ, त जहा-अप्पा पडिलेहा १, वेसासिए रूवे २, तवे अणुमए ३, लाघवे पसत्थे ४, विउले इंदियनिग्गहे ५' त्ति, सचेलत्वस्य तु धर्मोपकारित्वमग्न्याद्यारम्भनिवारकत्वेन संयमफलत्वात्, 'ज्ञानी' नञा एव प्रायस्त्विर्थश्चारका तद्भयभयादेव च मया सन्त्यपि वासास्यपास्यन्त इत्येव बोधवाघो परिदेवयेत्, किमुक्त भवति ?-अचेल सन् किमिदानीं शीतादिपीडितस्य मम शरणमिति न दैन्यमालम्बेत इति सूत्रार्थ ॥ १३ ॥ इह च केचिन्मिथ्यात्वाकुलितचेतस इदमित्थ महार्थकर्मप्रवादपूर्वोद्धृतप्रस्तुताध्ययनाधीतमपि सचेलत्वं तथा-सम्यक्त्वज्ञानशीलानि, तपश्चेतीह सिद्धये । तेषामुपग्रहार्थाय, स्मृत चीवरधारणम् ॥ १ ॥ जटी कूर्ची शिखी मुण्डी, चीवरी नग्न एव च । तप्यन्नपि तप कष्ट, मौढ्यादिंस्रो न सिद्ध्यति ॥ २ ॥ सम्यग्ज्ञानी दयावास्तु, ध्यानी यस्तप्यते तप नग्न श्चीवरधारी वा, स सिद्ध्यति महामुनिः ॥ ३ ॥ इति वाचकवचनानूदित चानुचितमित्याहु, तान् प्रति वक्तुमुपक्रम्यते-इह यो यदर्थी न स तन्निमित्तोपादान प्रयत्नाहतो, यथा घटार्थी मृत्पिण्डोपादान प्रति, चारित्रार्थिनश्च यतयस्तन्निमित्त च चीवरमिति,

[1] पञ्चभि स्थानै पूर्वपश्चिमयारर्हतोभगवतारचेलकत्व प्रशस्त भवति, तद्यथा-अल्पा प्रत्युपेक्षा १ वैश्वासिक रूपं २ तपोऽनुमतं ३ लाघव प्रशस्त ४ विपुल इन्द्रियनिग्रह ५

उक्तं च–"न [1]परोवएसविसया ण य छउमत्था परोवएसंपि। दैंति न य सिस्सवग्गं दिक्खंति जिणा जहा सव्वे ॥ १ ॥ तह सेसेहि य सव्वं कज्जं जइ तेहिँ सव्वसाहम्मं । एवं च कओ तित्थं? ण चेदचेलत्ति को गाहो ?, ॥ २ ॥" अथ जिनकल्पाकर्णनात्, तत्र हि न किञ्चिदुपकरणमिति चीवरस्याप्यभावः, तथा च न तस्य धर्मोपकारिता, ननु जिनकल्पिकानामुपकरणाभावः प्रवादतः आगमतो वा ?, न तावदाद्यपक्षो, न हि वसति किलात्र वटवृक्षे रक्ष इत्यादि निर्मूलप्रवादानां प्रमाणता, नाप्यागमतः, तेषामपि तत्र शक्त्यपेक्षयोपकरणप्रतिपादनात्, तदुक्तम्–[2]"जिणकप्पियादओ पुण सोवहओ सव्वकालमेगंतो । उवगरणमाणमेसिं पुरिसावेक्खाएँ बहुमेयं ॥ १ ॥" अथवा अस्तु जिनकल्पिकानामुपकरणाभावः, तथापि धृतिशक्तिसंहननश्रुतातिशययुक्तानामेव तत्प्रतिपत्तिः अथ रथ्यापुरुषाणामपि ?, यद्याद्यो विकल्पस्तत्किमेवंविधाः सम्प्रत्यपि सन्ति न वा?, सन्ति चेदुपलब्धिलक्षणप्राप्ता उपलभ्येरन्, अनुलब्धिलक्षणप्राप्ताश्च कुतः सत्त्वेन निश्चीयन्ते?, अथ न सन्ति, तादृशामेव जिनकल्पप्रतिपत्तिः, तर्हि वृथैव [3]"मणपरमोहिपुलाए आहारग खवग उवसमे कप्पे। संजमतिय केवलि सिज्झणा य जंबुम्मि वोच्छिन्ना ॥ १ ॥" इत्याप्तवचनानाश्रयणं, यदि तु रथ्यापुरुषाणामपीति कल्प्यते, तिरश्चामपि तत्कल्पनाऽस्तु, अथ देशविरतिभाज एव त इति न तेषां तत्प्रतिपत्तिः, तर्हि सर्वविरतिस्तत्कारणं, तथा च तद्वता एकेन यत्कृतं तत्किमखिलैरपि तद्वद्भिराचरणीयमथ तथाविधशक्तियुक्तैरेव ?, यद्याद्यो विकल्पस्तदैकस्मिन् मासषण्मासादिकं तपश्चरत्यन्यैरपि तच्चरणीयं स्याद्, अथ द्वितीयः पक्षस्तर्हि जिनकल्पोऽपि

---

१ न परोपदेशविषया न च छद्मस्थाः परोपदेशमपि । ददति न च शिष्यवर्गं दीक्षयन्ति जिना यथा सर्वे ॥ १ ॥ तथा शेषैरपि सर्वं कार्यं यदि तैः सर्वसाधर्म्यम् । एवं च कुतस्तीर्थं? न चेदचेला इति क आग्रहः? ॥ १ ॥ २ जिनकल्पिकादयः पुनः सोपधयः सर्वकालमेकान्तः । उपकरणमानमेतेषां पुरुषापेक्षया बहुभेदम् ॥ १ ॥ ३ मनः (पर्यायः) परमावधिः पुलाक आहारकः क्षपक उपशमकः (जिन) कल्पः । संयमत्रिकं केवलित्वं सिद्धिश्च जम्बौ व्युच्छिन्नाः ॥१॥

एगया अचेलए होइ, सचेले यावि एगया । एयं धम्महियं णच्चा, नाणी णो परिदेवए ॥ १३ ॥ (सूत्रम्)

व्याख्या—'एकदा' एकस्मिन् काले जिनकल्पप्रतिपत्तौ स्थविरकल्पेऽपि दुर्लभवस्त्रादौ वा सर्वथा चेलाभावेन भवति वा चेले विना वर्षादिनिमित्तमप्रावरणेन जीर्णादिवस्त्रतया वा 'अचेलक' इति अवस्त्रोऽपि भवति, एतदर्थं च 'अचेलए भवं होइ'त्ति तत्र स्वयम्-आत्मनैव न पराभियोगत, 'सचेल' सवस्त्रश्चाप्येकदा स्थविरकल्पित्वे तथाविधालम्बनेनावरणे भवति, यच्चैवं ततः किमित्याह—'एतद्' यथास्थौचित्येन सचेलत्वमचेलत्वं च धर्मो-यतिधर्मः तस्मै हितम्-उपकारकं धर्महितं 'ज्ञात्वा' अवबुध्य, तत्राचेलकत्वस्य धर्महितत्वमल्पप्रत्युपेक्षादिभि, यथोक्तम्—"'पञ्चहिं ठाणेहिं पुरिमपच्छिमाण अरहन्ताणं भगवंताणं अचेलए पसत्थे भवइ, त जहा-अप्पा पडिलेहा १, वेसासिए रूवे २, तवे अणुमए ३, लाघवे पसत्थे ४, विउले इंदियनिग्गहे ५"त्ति, सचेलत्वस्य तु धर्मोपकारित्वमग्न्याद्यारम्भनिवारकत्वेन संयमफलत्वात्, 'ज्ञानी' सम्यग् वस्तुतत्त्वज्ञः सन् 'नो परिदेवयेत्' न परिदेवनां कुर्यात् यथा मम अन्यस्यापि यासांभ्यागमन्त इत्येव बोधयाशो परिदेवयेत्, किमुक्तं भवति ?-अचेल सन् किमिदानीं शीतादिपीडितस्य मम शरणमिति न दैन्यमालम्बेत इति सूत्रार्थ ॥ १३ ॥ इह च केचिन्मिथ्यात्वानुलिप्तचेतस इदमित्थं महार्थंकसंप्रदायपूर्वादिभूतमस्तुताध्ययनाधीतमपि सचेलत्वं तथा-सम्यक्त्वज्ञानशीलानि, तपश्चेति सिद्धये । तेषामुपग्रहार्थाय, स्मृतं चीवरधारणम् ॥ १ ॥ जटी कूर्ची शिखी मुण्डी, चीवरी नग्न एव च । तप्यन्नपि तप कष्ट, मौढ्याद्धिंस्रो न सिद्ध्यति ॥ २ ॥ सम्यग्ज्ञानी दयावांस्तु, ध्यानी यस्तप्यते तप नग्न-श्चीवरधारी वा, स सिद्ध्यति महामुनिः ॥ ३ ॥ इति वाचकवचनानूदितं चानुचितमित्याहु, तान् प्रति पर्युपक्रम्यते-इह यो यदर्थी न स तन्निमित्तोपादानं प्रयत्नादतो, यथा घटार्थी मृत्पिण्डोपादानं प्रति, चारित्रार्थिनश्च एतदस्तन्निमित्तं च चीवरमिति,

१ पञ्चभि स्थाने पूर्वपश्चिमयोरर्हतोर्भगवतोरचेलकत्वं प्रशस्तं भवति, तद्यथा-अल्पा प्रत्युपेक्षा १ वैश्वासिकं रूपं २ तपोऽनुमतं ३ लाघवं प्रशस्तं ४ विपुल इन्द्रियनिग्रह ५

उक्तं च-"न [1]परोवएसविसया ण य छउमत्था परोवएसंपि। देंति न य सिस्सवग्गं दिक्खंति जिणा जहा सव्वे ॥ १ ॥
तह सेसेहि य सव्वं कज्जं जइ तेहिँ सव्वसाहम्मं। एवं च कओ तित्थं? ण चेदचेलत्ति को गाहो?, ॥ २ ॥" अथ जिनकल्पा-
कर्णनात्, तत्र हि न किञ्चिदुपकरणमिति चीवरस्याप्यभावः, तथा च न तस्य धर्मोपकारिता, ननु जिनकल्पिकानामुपकरणाभावः
प्रवादतः आगमतो वा?, न तावदाद्यपक्षो, न हि वसति किलात्र वटवृक्षे रक्ष इत्यादि निर्मूलप्रवादानां प्रमाणता, नाप्यागमतः,
तेषामपि तत्र शक्त्यपेक्षयोपकरणप्रतिपादनात्, तदुक्तम्-[2]"जिणकप्पियादओ पुण सोवहओ सव्वकालमेगंतो। उवगरणमाणमेसिं
पुरिसावेक्खाए बहुभेयं ॥ १ ॥" अथवा अस्तु जिनकल्पिकानामुपकरणाभावः, तथापि धृतिशक्तिसंहननश्रुतातिशययुक्तानामेव
तत्प्रतिपत्तिः अथ रथ्यापुरुषाणामपि?, यद्याद्यो विकल्पस्तत्किमेवंविधाः सम्प्रत्यपि सन्ति न वा?, सन्ति चेदुपलब्धिलक्ष-
णप्राप्ता उपलभ्येरन्, अनुलब्धिलक्षणप्राप्ताश्च कुतः सत्त्वेन निश्चीयन्ते?, अथ न सन्ति, तादृशामेव जिनकल्पप्रतिपत्तिः, तर्हि-
वृथैव [3]"मणपरमोहिपुलाए आहारग खवग उवसमे कप्पे। संजमतिय केवलि सिज्झणा य जंबुम्मि वोच्छिन्ना ॥ १ ॥" इत्याप्त-
वचनानाश्रयणं, यदि तु रथ्यापुरुषाणामपीति कल्प्यते, तिरश्चामपि तत्कल्पनाऽस्तु, अथ देशविरतिभाज एव त इति न तेषां
तत्प्रतिपत्तिः, तर्हि सर्वविरतिस्तत्कारणं, तथा च तद्वता एकेन यत्कृतं तत्किमखिलैरपि तद्वद्भिराचरणीयमथ तथाविधशक्तियुक्तै-
रेव?, यद्याद्यो विकल्पस्तदैकस्मिन् मासषण्मासादिकं तपश्चरत्यन्यैरपि तच्चरणीयं स्यात्, अथ द्वितीयः पक्षस्तर्हि जिनकल्पोऽपि

---

१ न परोपदेशविषया न च छद्मस्थाः परोपदेशमपि । ददति न च शिष्यवर्गं दीक्षयन्ति जिना यथा सर्वे ॥ १ ॥ तथा शेषैरपि सर्वं कार्यं
यदि तैः सर्वसाधर्म्यम् । एवं च कुतस्तीर्थं? न चेदचेला इति क आग्रहः? ॥ १ ॥ २ जिनकल्पिकादयः पुनः सोपधयः सर्वकालमेकान्तः । उपकरणमान-
मेतेषां पुरुषापेक्षया बहुभेदम् ॥ १ ॥ ३ मनः (पर्यायः) परमावधिः पुलाक आहारकः क्षपक उपशमकः (जिन) कल्पः । संयमत्रिकं केवलित्वं सिद्धिश्च
जम्बौ व्युच्छिन्नाः ॥१॥

णोऽवि देहम्मि, णायरंति ममाइउ(यं) ॥ १ ॥" ति, नापि धारणादिमात्रेण, एवं हि शीतकालादौ प्रतिमाप्रतिपन्नादिषु केनचिद्भक्त्यादिनो- परि क्षिप्तस्यापि चीवरस्य परिग्रहताप्रसङ्गः, अथ तत्र स्वयंग्रहाभावाददोषः, तर्हि स्वयंग्रह परिग्रहत्वे हेतुः, तथा च कुण्डिकाद्यपि नोपादेयं दृष्टेष्टविरोधि चेदम्, अथ तत्र मूर्च्छाया अभावादपरिग्रहत्वम्, एवं सति संयमरक्षणायोपादीयमाने चीवरे तदभावात्तदस्तु, उक्तं च-" 'जंपि वत्थं व पायं वा, कंबलं पायपुंछणं । तंपि संजमलज्जट्ठा, धारंति परिहरंति य ॥ ११ ॥" अथ संसक्तिविषयतया, सैवमाहारेऽपि सा किमस्ति नास्ति वा ?, न तावन्नास्ति, कृमिकण्डूपदाद्युत्पातस्य तत्र प्रतिप्राणि प्रतीतत्वात्, अथास्ति परं यतनया न दोषः, वस्त्रेऽपि तुल्यं । कषायकारणत्वेन चेत्, तत्किमात्मनः परेषां वा ?, यद्यात्मनस्तदा श्रुतमपि केषाञ्चिदहङ्कार- हेतुत्वेन कषायकारणमिति तदपि नोपादेयं स्यात्, अथ विवेकिनो न तद्धेतुरिति चेत्, "प्रथमं ज्ञानं ततो दये"ति नीतितो धर्मो- पकारि चेति तदुपादानं, चीवरेऽपि समानमेतत्, अथ चीवरस्य धर्मानुपकारित्वात्तत्त्याज्यता, ननु कुत एतदवसितं, किमचीवरा- स्तीर्थकृत इति श्रुतेरुत जिनकल्पाकर्णनात् 'जिताचेलपरीषहो मुनि' रिति वचनतो वा ?, न तावदाद्यो विकल्पः, सूत्रे हि तीर्थकृता- मचीवरत्वं कदाचित्सर्वदा वा ?, कदाचिच्चेत्को वा किमाह ?, कदाचिदस्माकमप्यस्याभिमतत्वात्, अथ सर्वदा, तन्न, 'सव्वेऽवि एगदूसेण निग्गया जिणवरा उ चउवीसं' मिति वचनात्, अथ तत्र 'पगदूसेणं' तिपाठः, सर्वेऽपि संसारदोषेण एकेन निर्गता इतिव्याख्या, नन्वेवमनवस्था, सर्वत्र परैरपि स्वेच्छारचितपाठानां सुकरत्वात्, किं च-तीर्थकृतामचीवरत्वे तेषामेव तद्धर्मोपकारीति निश्चयोऽस्तु, नापरेषां, न हि यदेव तेषां धर्मोपकारि तदेवेतरेषामपि, अन्यथा यथा न ते परोपदेशतः प्रवर्तन्ते यथा च छद्मस्थावस्थायां परोपदेशं दीक्षां वा न प्रयच्छन्ति, तथाऽस्माभिरपि विधेयमिति मूलच्छेद एव तीर्थस्य,

---

१ यदपि वस्त्रं वा पात्रं वा, कम्बलं पादप्रोञ्छनम् । तदपि संयमलज्जार्थं, धारयन्ति परिभुञ्जन्ति च ॥ १ ॥ २ सर्वेऽप्येकदूष्येण निर्गता जिन- वराश्चतुर्विंशतिः ।

उक्तं च–"न [1]परोवएसविसया ण य छउमत्था परोवएसंपि। देंति न य सिस्सवग्गं दिक्खंति जिणा जहा सव्वे ॥ १ ॥ तह सेसेहि य सव्वं कज्जं जइ तेहिँ सव्वसाहम्मं। एवं च कओ तित्थं? ण चेदचेलत्ति को गाहो?, ॥ २ ॥" अथ जिनकल्पाकर्णनात्, तत्र हि न किञ्चिदुपकरणमिति चीवरस्याप्यभावः, तथा च न तस्य धर्मोपकारिता, ननु जिनकल्पिकानामुपकरणाभावः प्रवादतः आगमतो वा?, न तावदाद्यपक्षो, न हि वसति किलात्र वटवृक्षे रक्ष इत्यादि निर्मूलप्रवादानां प्रमाणता, नाप्यागमतः, तेषामपि तत्र शक्त्यपेक्षयोपकरणप्रतिपादनात्, तदुक्तम्–[2]"जिणकप्पियादओ पुण सोवहओ सव्वकालमेगंतो। उवगरणमाणमेसिं पुरिसावेक्खाए बहुभेयं ॥ १ ॥" अथवा अस्तु जिनकल्पिकानामुपकरणाभावः, तथापि धृतिशक्तिसंहननश्रुतातिशययुक्तानामेव तत्प्रतिपत्तिः अथ रथ्यापुरुषाणामपि?, यद्याद्यो विकल्पस्तत्किमेवंविधाः सम्प्रत्यपि सन्ति न वा?, सन्ति चेदुपलब्धिलक्षणप्राप्ता उपलभ्येरन्, अनुलब्धिलक्षणप्राप्ताश्च कुतः सत्त्वेन निश्चीयन्ते?, अथ न सन्ति, तादृशामेव जिनकल्पप्रतिपत्तिः, तर्हि वृथैव [3]"मणपरमोहिपुलाए आहारग खवग उवसमे कप्पे। संजमतिय केवलि सिज्झणा य जंबुम्मि वोच्छिन्ना ॥ १ ॥" इत्याप्तवचनानाश्रयणं, यदि तु रथ्यापुरुषाणामपीति कल्प्यते, तिरश्चामपि तत्कल्पनाऽस्तु, अथ देशविरतिभाज एव त इति न तेषां तत्प्रतिपत्तिः, तर्हि सर्वविरतिस्तत्कारणं, तथा च तद्वता एकेन यत्कृतं तत्किमखिलैरपि तद्भिराचरणीयमथ तथाविधशक्तियुक्तैरेव?, यद्याद्यो विकल्पस्तदैकस्मिन् मासषण्मासादिकं तपश्चरत्यन्यैरपि तच्चरणीयं स्याद्, अथ द्वितीयः पक्षस्तर्हि जिनकल्पोऽपि

---

१ न परोपदेशविषया न च छद्मस्थाः परोपदेशमपि। ददति न च शिष्यवर्गं दीक्षयन्ति जिना यथा सर्वे ॥ १ ॥ तथा शेषैरपि सर्वं कार्यं यदि तैः सर्वसाधर्म्यम्। एवं च कुतस्तीर्थं? न चेदचेला इति क आग्रहः? ॥ १ ॥ २ जिनकल्पिकादयः पुनः सोपधयः सर्वकालमेकान्तः। उपकरणमानमेतेषां पुरुषापेक्षया बहुभेदम् ॥ १ ॥ ३ मनः (पर्यायः) परमावधिः पुलाक आहारकः क्षपक उपशमकः (जिन) कल्पः। संयमत्रिकं केवलित्वं सिद्धिश्च जम्बौ व्युच्छिन्नाः ॥१॥

तथाविधशक्तियुक्तैव प्रतिपत्तव्य, अथ तथाविधशक्तिविकलाना तत्परिभोगे बहुतरदोषसम्भव इति न तद्धरण, तदिहापि तुल्य, तथाहि—सम्प्रत्यवेदानीन्तनयतीना तथाविधशक्तिसहननविकलतया हिमकणानुषक्तशीतादिषु बहुतरदोषहेतुकमग्न्यारम्भादिक तथा तथाविधाच्छादनाभावत शीतादिखेदिताना शुभध्यानाभावेन सम्यक्त्वादिविचलनम्, उक्त च वाचकै—"शीतवातातपैर्दंशैर्मशकै ध्यापि खेदित । मा सम्यक्त्वादिषु ध्यान, न सम्यक् सविधास्यति ॥ १ ॥" यच्च 'जिनाचेलपरीषहो मुनि' रिति वचनतो न चीवर धर्मोपकारीति तत्र जिताचेलपरीषहत्व चेलाभावेनैवाहोस्विदेषणाशुद्धतत्परिभोगेनापि ?, यदि चेलाभावेनैव, तत क्षुत्परीषह- जयनमप्याहाराभावेनैवेति व्रतग्रहणकाल एवानशनमायातम् एतच्च भवतोऽपि नाभिमत, तत परिशुद्धोपभोगितया जिताचेल परीषहत्वमिति द्वितीय एव पक्ष स चास्मत्पथवर्त्येवेति न कुतोऽपि चीवरस्य धर्मानुपकारित्वनिश्चय, अथ परेषा कषायकारण त्वेन चारित्रबाधकत्व चीवरस्य, तर्हि धर्मादयोऽपि कस्यचित् कषायकारण न वा ?, न तावन्न, तेऽपि कस्यचित्कषायहेतव इति चीवरवत्तेऽपि हातव्या, आह च—"[1]अत्थि य किं किंचिजए जस्स व कस्स व कसायबीय त । वत्थु ण होज्ज ? एव धम्मोऽवि तुमे ण घेतव्वो ॥ १ ॥ जेण कसायणिमित्त जिणोऽवि गोसालसगमाईण । धम्मो धम्मपराविं य पडिणीयाण जिणमय च ॥ २ ॥ अथैषा मुख्यकृततया कषायहेतुत्वेऽपि न हेयता, तदिहापि समानम्, उक्त च वाचकसिद्धसेनेन—'मोक्षाय धर्मसिद्ध्यर्थं, शरीर धार्यते यथा । शरीरधारणार्थं च, भैक्षग्रहणमिष्यते ॥ १ ॥ तथैवोपग्रहार्थाय, पात्र चीवरमिष्यते । जिनैरुपग्रह साधोरिष्यते न परिग्रह ॥ २ ॥' इत्यादि । औदासीन्येनापि न चीवरस्य चारित्र प्रत्यनिमित्तता, तस्य तदुपकारित्वात्, यच्च यदुपकारि न तत्र स्मिन्नुदासीन, यथा तन्त्वादय पटे चारित्रोपकारि च चीवर, तथाहि—सयमात्मक चारित्र, न च तस्य तत्परिहारेण शुद्धिरस्ति,

[1] अस्ति च किं किंचित् जगति यस्य वा कस्य वा कषायबीज तत् । वस्तु न भवेत् ? एव धर्मोऽपि त्वया न ग्रहीतव्य ॥ १ ॥ येन कषाय निमित्त जि ) ( गोशालसगमकादीनाम् । धर्मा धर्मपरा अपि च प्रत्यनीकाना जिनमत च ॥ २ ॥

आगमश्च– "किं सञ्जमोवयारं करेइ वत्थाइ जइ मई सुणसु । सीयत्ताणं ताणं जलणतणगयाण सत्ताणं ॥ १ ॥ तह निसि चाउ-कालं सज्झायज्झाणसाहणमिसीणं । हिममहियावासोसारयाइरक्खाणिमित्तं तु ॥ २ ॥" इत्यतः स्थितमेतत्–चारित्रनिमित्तं चीवर-मिति नासिद्धता हेतोः, विरुद्धत्वानैकान्तिकत्वे तूक्तानुसारतः परिहर्त्तव्ये । ततश्च 'निर्ग्रन्थानाममलज्ञानयुतैस्तीर्थकृद्भिरुक्तानि । सम्यग्व्रतानि यस्मान्नैर्ग्रन्थ्यमतः प्रशंसन्ति ॥ १ ॥ रागाद्यपचयहेतुं नैर्ग्रन्थ्यं स्वप्रवृत्तितस्तेषाम् । तद्भक्तिरतोऽवश्यं वस्त्रादिपरिग्रह-युतानाम् ॥ २ ॥' इत्यादि दुर्मतिपरिस्पन्दितमपकर्णनीयम् ॥ सम्प्रति 'महल्लेत्तिद्वारं, तत्र च 'एयं धम्महियं नच्चे' त्यादिसूत्रसूचितं दृष्टान्तमाह—

वीयमय देवदत्ता गंधारं सावयं पडियरित्ता । लहइ सयं गुलियाणं पज्जोएण णी(णाणि) ओज्जेणिं ॥ ९४ ॥
दट्ठूण चेडिमरणं पभावई पव्वइत्तु कालगया । पुक्खरकरणं गहणं दसउरपज्जोयमुयणं च ॥ ९५ ॥
माया य रुद्दसोमा पिया य नामेण सोमदेवत्ति, भाया य फग्गुरक्खिय तोसलिपुत्ता य आयरिया ॥ ९६ ॥
सिंहगिरि भद्दगुत्ते वयरक्खमणा पढित्तु पुव्वगयं । पव्वाविओ य भाया रक्खियखमणेहिं जणओ य ॥९७॥

व्याख्या—वीतभये देवदत्ता गन्धारं श्रावकं प्रतिजागर्य लभते शतं गुलिकानां प्रद्योतेनानीतोज्जयिनीं, दृष्ट्वा चेटी-मरणं प्रभावती प्रव्रज्य कालगता पुष्करकरणं ग्रहणं दशपुरप्रद्योतमोचनं च, माता च रुद्रसोमा पिता च नाम्ना सोमदेव इति भ्राता च फल्गुरक्षितः तोसलिपुत्राश्चाचार्याः सिंहगिरिभद्रगुप्ताभ्यां च वज्रक्षमणात्पठित्वा पूर्वगतं प्रव्राजितश्च

१ किं संयमोपकारं करोति वस्त्रादि यदि मतिः शृणु । शीतत्राणं त्राणं ज्वलनतृणगतानां सत्त्वानाम् ॥ १ ॥ तथा निशि चतुष्कालं स्वाध्यायध्यान-साधनमृषीणाम् । हिममहिकावर्षाऽवश्यायरजआदिरक्षानिमित्तं तु ॥ २ ॥

भ्राता रक्षितक्षमणैर्जनकश्चेति गाथाचतुष्टयाक्षरार्थं ॥ ०४-०५-०६-०७ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—'ओयरता-मिवडिमायलव्यवं दसपुरुप्पत्ति च भाणिऊण ताव भाणियव्वं जाव अज्जवयरसामिणो सगासे णव पुव्वाणि दसमस्स य पुव्वस्स किंचि अहिज्जिऊण अज्जरक्खिया दसपुरमेव गया, तत्थ सव्वो सयणवग्गो पव्वाविओ-माया भाया भगिणी, जो सो तस्स पिता सोऽवि तेसिं अणुरागेण तेहिं चेव सम्मं अच्छइ, णो पुण लिंगं गेण्हइ लज्जाए, किह समणतो पव्वइस्सं ?, इत्थं मम धूयातो सुण्हातो णत्तुगीतो, तासिं पुरतो ण तरामि णग्गो अच्छिउं, एवं सो तत्थ अच्छइ, बहुसो आयरिया भणंति, ताहे सो भणति-जइ मम जुयलएण कुंडियाए छत्तेणं उवहणाहिं जण्णोवइएण य समं पव्वावेह तो पव्वयामि, सो पुण चरणकरणसज्झाए अणुग-त्तेहिं गिण्हावियव्वो, 'ताहे ते भणंति-अच्छह तुब्भे कडिपट्टएणं, सोऽवि थेरो भणइ-छत्तएणं विणा ण तरामि अच्छिउं,

१ जीवरस्वामिप्रतिमावक्तव्यतां दशपुरोत्पत्तिं च भणित्वा तावद्भणितव्यं यावदार्यवज्रस्वामिनः सकाशे नव पूर्वाणि दशमस्य च पूर्वस्य किंचिदधीत्यार्य-रक्षिता दशपुरमेव गताः, तत्र सर्वः स्वजनवर्गः प्रव्राजितः—माता भ्राता भगिनी, य स तेषां पिता सोऽपि तेषामनुरागेण तत्रैव सम्यक् तिष्ठति, न पुनर्लिङ्गं गृह्णाति लज्जया, कथं श्रमणः प्रव्रजिष्यामि ?, अत्र मम दुहितरः स्नुषा नप्तारः, तासां पुरतो न शक्नोमि नग्नः स्थातुम्, एवं स तत्र तिष्ठति, बहुश आचार्या भणन्ति, तदा स भणति-यदि मां युगलेन कुण्डिकया छत्रेण उपानद्भ्यां यज्ञोपवीतेन च समं प्रव्राजयत तदा प्रव्रजामि, प्रव्रजितः स पुनश्चरण-करणस्वाध्यायमनुवर्तयद्भिर्ग्राहयितव्य,

२ तदा ते भणन्ति-तिष्ठत यूयं कटीपट्टकेन, सोऽपि स्थविरो भणति-छत्रेण विना न शक्नोमि स्थातुं, छत्रमपि, करकेण विना दुःसमुच्चारप्रश्रवण-क्रियादि, श्रमणमपि तिष्ठति, अवशेषं सर्वं परिहरन्ति। अन्यदा च चैत्यानि वन्दितुं गताः, आचार्यैश्च (डिम्भ) रूपाणि ग्राहयन्ति, भणत-सर्वान् वन्दामहे एकं छत्रिणं मुक्त्वा, एवं भणितस्तदा स जानाति-इमे मम पुत्रा नप्तारश्च वन्द्यन्ते, अहं कथं न वन्द्ये ?, तदा भणति-किमहमप्रव्रजित इति ?, तानि भणन्ति-किं प्रव्रजितानामुपानत्करककमण्डलूछत्राणि भवन्ति ?, तदा स जानाति-एतान्यपि मां प्रतिबोधयन्ति, तत् त्यजामि, तदा पुनः भणति-अहं पुत्र ! छत्रेण, तदा

छत्तयंपि करगेण विणा दुक्खं उच्चारपासवणं वोसिरिउं, वंभसुत्तगंपि अच्छउत्ति, अवसेसं सव्वं परिहरइ। अन्नया य चेइयाइं, वंदिउं गया, आयरिया चेडगरूवाणि गाहंति, भणह-सव्वे वंदामो एगं छत्तइल्लं मोत्तुं, एवं भणितो, ताहे सो जाणति-इमे मम पुत्ता णत्तुया य वन्दिज्जंति, अहं कीस न वंदिज्जामि ? ताहे भणति-किमहं अपव्वइओत्ति ?, ताणि भणंति-किं पव्वइयगाणोवाणहकरगवंभसुत्तछत्तगाणि भवंति ?, ताहे सो जाणति-एयाणिवि ममं पडिचोएंति, ता छड्डेमि, ताहे पुत्तं भणति-अलाहि पुत्तगा ! छत्तेणं, ताहे ते भणंति-अलाहि, जाहे उण्णं होहिति ताहे कप्पो उवरिं करेहत्ति, एवं ताणि मोत्तुं करइल्लं, तत्थ से पुत्तो भणति-मत्तएणं चेव सन्नाभूमिं गम्मइ, एवं जन्नोवइयं च मुयइ, [1]ताहे, आयरिया भणंति-को वा अम्हे न जाणइ जहा वंभणा, एवं ताणि तेण मुक्काणि, पच्छा ताणि पुणो भणंति-सव्वे वंदामो मोत्तुण कडिपट्टइल्लं, ताहे सो रुट्ठो भणति-सह अज्जयपज्जएहिं मा वन्दह, अन्ने वंदिहंति ममं, एयं कडिपट्टयं न छड्डेमि, तत्थ य साहू भत्तपच्चक्खायतो, ताहे तस्स निमित्तं कडिपट्टवोसिरणट्ठयाए

---

ते भणन्ति-अलं, यदोष्णं भविष्यति तदा कल्पं उपरि कुर्या इति, एवं तानि मुक्त्वा करकवन्तं, तत्र तस्य पुत्रो भणति-मात्रकेणैव संज्ञाभूमिः गम्यते, एवं यज्ञोपवीतं च मुञ्चति,

१ तदा आचार्या भणन्ति-को वाऽस्मान् न जानाति यथा ब्राह्मणाः, एवं तानि तेन मुक्तानि, पश्चात्तानि पुनर्भणन्ति-सर्वान् वन्दामहे मुक्त्वा कटीपट्टकवन्तं, तदा स रुष्टो भणति-सह आर्यकप्रार्यकैः (पितृपितामहैः) मा वन्दिध्वम्, अन्ये वन्दिष्यन्ते मह्यम्, अतं कटीपट्टकं न छर्दयामि, तत्र च साधुः प्रत्याख्यातभक्तः, तदा तन्निमित्तं कटीपट्टकव्युत्सर्जनार्थाय आचार्या भणन्ति-एतत् महाफलं भवति यस्साधुं वहति, तत्र च प्रथमप्रव्रजिताः संज्ञिताः (संकेतिताः)-यूयं भणेत—वयं वहाम एनम्, एवं ते उपस्थिताः, तत्र चाचार्या भणन्ति-अस्माकं स्वजनवर्गो मा निर्जरां प्रापत्, ततो यूयं सर्वे भणथ—वयमेव वहामः, तदा स स्थविरो भणति-किं पुत्र ! अत्र बहुतरा निर्जरा ?, आचार्या भणन्ति-बाढं, किमत्र भणितव्यं ?, तदा स भणति—तत् कथयाहमपि वहामि, आचार्या भणन्ति-अत्रोपसर्गा उत्पद्यन्ते, चेटरूपाणि लगन्ति।

आयरिया भणंति-एय महाफलं हवइ जो साधुं वहइ, तत्थ य पढमएव्वइया सन्निया-तुमे भणिआह-अम्हे एय वहामो, एवं ते उवट्ठिया, तत्थ य आयरिया भणति अम्ह सयणवग्गो मा णिज्जर पावउ ?, भो तुब्भे चेव सव्वे भणह अम्हे येव वहामो, ताहे सो थेरो भणति-किं पुत्ता ! एत्थ बहुतरया णिज्जरा ?, आयरिया भणंति-बाढं, किं एत्थ भणियव्वं ?, ताहे सो भणति-तो खाइ अहपि वहामि, आयरिया भणंति एत्थ उवसग्गा उप्पज्जंति, चेडरूवाणि लग्गंति, 'यदि तरसि अहियासिउं वहाहि, अह णाहियासेसि ताहे अम्ह न सुंदर भवति, एत्थ सो थिरो कओ जाहे सो उक्खित्तो साहू मग्गओ वच्चइ, पच्छओ संजईओ ठिआतो, ताहे खुड्डगा भणिआ एत्ताहे कडिपट्टयं मुयह, ताहे सो मुत्तुमारद्धो, ताहे अन्नेहिं भणिओ-मा मोयिहि, तत्थ से अन्नेण कडिपट्टओ पुरओ काऊण दोरेण बद्धो, ताहे सो लज्जिओ त वहइ, मग्गओ मम पिच्छति सुण्हाओ अ, एत्थ तेणवि उवसग्गो उट्ठिओ-त्तिकाऊण वूढं, पच्छा आगतो तहेव, ताहे आयरिया भणंति-किं अज्ज खता ! इमं ? ताहे सो भणइ-सो एस अज्ज पुत्त ! उवसग्गो उवट्ठिओ, आणेह साडयं, ताहे भणइ-किं व साडएणंति ?, ज दट्ठव्व त दिट्ठं चोलपट्टओ चेव मे भवउ, एव ता सो चोलपट्टंपि गिण्हाविओ। तेणं पुव्व अचेलपरीसहो नाहियासितो पच्छाऽहियासिओत्ति ॥ अचेलस्य चाप्रतिबद्धविहारिण शीतादिभिरभिभूयमानत्वेनारतिरप्युत्पद्येतातस्तत्परीषहमाह—

१ यदि शक्नोष्यधिसोढुं वह, अथ नाधिसहसे तदाऽस्माकं न सुन्दरं भवति, अत्र स स्थिर कृत, यदा स उत्क्षिप्त साधुमार्गेण व्रजति, पश्चात् संयत्य स्थिता, तदा क्षुल्लकं भणिता-अधुना कटीपट्टक मुञ्चत तदा स मोक्तुमारब्ध, तदाऽन्यैर्भणित -मा मुच, तत्र तस्यान्येन कटीपट्टक पुरत कृत्वा दवरकेण बद्ध, तदा स लज्जितस्त वहति, पृष्ठतो मम पश्यन्ति स्नुषाश्च, एव तेनापि उपसर्ग उत्थित इतिकृत्वा व्यूढं, पश्चादागतस्तथैव, तदाऽऽचार्या भणन्ति-किमद्य पितरिदम्, तदा स भणति-स एषोऽद्य पुत्र ! उपसर्ग उत्थित, आनयत शाटकं, तदा भणति-किं वा शाटकेनेति, यद्द्रष्टव्य त दृष्ट, चोलपट्टक एव मे भवतु, एवं तावत्स चोलपट्टकमपि ग्राहित । तेन पूर्वमचेलपरीषहो नाध्यासित, पश्चाद् आसित ।

अरई अणुप्पविसे, तं तितिक्खे परीसहं ॥ १४ ॥ (सूत्रम्)

गामाणुगामं रीयंतं, अणगारमकिंचणं ।

व्याख्या—ग्रसते बुध्यादीन् गुणान् इति ग्रामः स च जिगमिषितः अनुग्रामश्च-तन्मार्गानुकूलः अननुकूलगमने प्रयोजना-भावाद् ग्रामानुग्रामं, यद्वा ग्रामश्च महान् अणुग्रामश्च स एव लघुर्ग्रामाणुग्रामम्, अथवा-ग्राममिति रूढिशब्दत्वादेकस्माद्ग्रामादन्यो ग्रामः ततोऽपि चान्यो ग्रामानुग्राममुच्यते, नगरोपलक्षणमेतत्, ततो नगरादींश्च, किमित्याह—'रीयंतं'ति तिङ्व्यत्ययाद्रीयमाणं-विरहन्तम् 'अनगारम्' उक्तस्वरूपम् 'अकिञ्चनं' नास्य किञ्चन प्रतिबन्धास्पदं धनकनकाद्यस्तीत्यकिञ्चनो-निष्परिग्रहः तथाभूतम् 'अरतिः' उक्तरूपा 'अनुप्रविशेत्' मनसि लब्धास्पदा भवेत्, 'त'मित्यरतिस्वरूपं 'तितिक्षेत' सहेत परीषहमिति सूत्रार्थः ॥ १४ ॥

तत्सहनोपायमेवाह—

धम्मारामे निरारंभे, उवसंते मुणी चरे ॥ १५ ॥ (सूत्रम्)

अरइं पिट्ठओ किच्चा, विरओ आयरक्खिए ।

व्याख्या—'अरतिं' संयमविषयां मोहनियकर्म्मप्रकृतिरूपां पृष्ठतः कृत्वा कोऽर्थः? धर्मविघ्नहेतुरियमितिमत्या तिरस्कृत्य, किमित्याह—'विरतः' हिंसादिभ्य उपरतः आत्मा रक्षितः दुर्गतिहेतोरपध्यानादेरनेनेत्यात्मरक्षितः, आहिताग्न्यादिषु दर्शनात् क्तान्तस्य परनिपातः, आयो वा-ज्ञानादिलाभो रक्षितोऽनेनेत्यायरक्षितः, धर्मे-श्रुतधर्मादौ आङित्यभिव्याप्त्या रमते-रतिमान् भवतीति धर्मारामः, यद्वा-धर्म एव सततमानन्दहेतुतया प्रतिपाल्यतया वा आरामो धर्मारामस्तत्र, स्थित इति गम्यते, निर्गत आरम्भाद्-असत्क्रियाप्रवर्त्तनलक्षणात् निरारम्भः 'उपशान्तः' क्रोधाद्युपशमात् 'मुनिः' सर्वविरतिप्रतिज्ञाता चरेत्, "[1]पलिओवमं झिज्जइ सागरोवमं, किमंग पुण मज्झ इमं मणोदुहं'ति विचिन्तयन्संयमाध्वनि यायात्, न पुनरुत्पन्नारतिरपि अवधावनानुप्रेक्षी भवेद्। इह च विर-

---

१ पल्योपमं क्षीयते सागरोपमं किमङ्ग पुनर्ममेदं मनोदुःखमिति ।

त्यादिविशेषणानि अरतितिरस्करणफलतया, यद्वा यत एव विरतोऽत एवात्मरक्षित इत्यादिहेतुफलतया नेयानीति सूत्रार्थः ॥१५॥ इदानीं तापसद्वारमनुस्मरन् 'अरइ अणुप्पवेसे' इत्यादिसूत्रसूचितमुदाहरणमाह—

अयलपुरे जुवराया सीसो राहस्स नगरीमुज्जेणिं। अज्जा राहक्खमणा पुरोहिए रायपुत्तो य ॥ ९८ ॥
कोसंबीए सिट्ठी आसी नामेण तावसो तहियं। मरिऊण सूयरोरग जाओ पुत्तस्स पुत्तोत्ति ॥ ९९ ॥

व्याख्या—अचलपुरे युवराज शिष्यो राधस्य नगरीमुज्जयिनीम् आर्या राधक्षमणा पुरोहितो राजपुत्रश्च कौशाम्ब्यां श्रेष्ठी आसीत्तापसः तत्र मृत्वा 'सूयरोरगो' त्ति सूकरः उरगो जातः पुत्रस्य पुत्र इति गाथाद्वयाक्षरार्थः ॥ ९८-९९ ॥ एतदर्थस्तु सम्प्रदायादवसेयः, स चायम्—

'अचलपुरं नाम पतिट्ठाणं, तत्थ जियसत्तू राया, तस्स पुत्तो जुवराया, सो राहायरियाण अंतिए पव्वइओ। सोय अन्नया विहरंतो गतो तगरं नगरिं, तस्स य राहायरियस्स सज्झंतेवासी अज्जराहखमणा णाम उज्जेणीए विहरंति, तओ आगया साहुणो तगरं, गया राहसमीवं, ते पुच्छिया-निरुवसग्गंति, भणंति-रायपुत्तो पुरोहियपुत्तो य बाहिंति, तस्स जुवरायपव्वतियस्स सो

१ अचलपुरं नाम प्रतिष्ठानं, तत्र जितशत्रू राजा, तस्य पुत्रो युवराज, स राधाचार्याणामन्तिके प्रव्रजित । स चान्यदा विहरन् गतस्तगरां नगरीं, तस्य च राधाचार्यस्य सधोऽन्तेवासिन आर्यराधक्षमणा नामोज्जयिन्यां विहरन्ति, तत आगताः साधवस्तगरां, गता राधसमीपं, ते पृष्टा निरुपसर्गमिति, भणन्ति—राजपुत्रः पुरोहितपुत्रश्च बाधेते, तस्य युवराजप्रव्रजितस्य स राजपुत्रो भ्रातृव्य, मा संसारं भ्रमीदित्यापृच्छ्याचार्यान् गत उज्जयिनीं, भिक्षावेलायामुद्ग्राह्य प्रस्थित, तौ द्वावपि तिष्ठत तौ, तौ प्रेक्ष्योत्थितौ, तेनापि महता शब्देन धर्मलाभित तौ भणत —अहो ऊर्ध्व प्रव्रजितोऽस्माकं मार्गणागत, वन्दावह इति,

रायपुत्तो भत्तिज्जतो, मा संसारं भमिहितित्ति आपुच्छिऊण आयरिए गओ उज्जेणिं, भिक्खवेलाए उग्गाहेऊण पट्ठितो, आयरिएहिं भणिओ-अच्छाहि, सो भणइ-न अच्छामि, नवरं दाएह तं पडणीयघरं, चेल्लगो भणिओ-वच्च दाएहि, तेण दाइयं, सो तत्थ गतो, वीसत्थो पविट्ठो, तत्थ ते दोऽवि अच्छंति, ते तं पिच्छिऊण उट्ठिया, तेणवि महया सद्देणं धम्मलाभियं, ते भणंति-अहो! लट्ठं पव्वइयगो अम्हंतेण गतो, वंदामोत्ति, [1]भणंति ते-आयरिया! तुब्भे गाइउं जाणह? तेण भणियं-आमं जाणामो, तुब्भे वाएह, ते आढत्ता, जाव ण जाणंति, तेण भण्णइ-एरिसगा चेव तुब्भे कोलियगा, ण किंचि जाणह, ते रुट्ठा उट्ठाइया, तेण घेत्तुं तेसिं णिजुद्धं जाणंतएण सव्वे संधी खोइया, पढमं ताव पिट्टिया, ते हम्मंता राडिं करेंति, परियणो जाणइ-सो एस पव्वइओ हम्मंतो राडिं करेइ, सोऽवि गतो, पच्छा तेहिं दिट्ठा, णवि जीवंति, णवि मरंति, णवरं णिरिक्खंति एक्केक्कं दिट्ठीए, पच्छा रण्णो सिट्ठं पुरोहियस्स य-जहा कोऽवि पव्वइयगो, तेण दोऽवि जणा संखलेत्तूण मुक्का, पच्छा राया सव्वबलेणागतो पव्वइगाण मूले, सोऽवि साहू एक्कपासे अच्छइ परियट्टंतो, राया आयरियाणं पाए पडिओ, पसायमावज्जह, आयरिओ भणइ-अहं न याणामि, महाराय! इत्थ एगो साहू पाहुणो, जइ परं तेण होज्जा, राया तस्स मूलमागतो, पच्चभि-

---

१ भणतस्तौ-आचार्या! यूयं गातुं जानीथ, तेन भणितम्-ओम् जानीमः, युवां वादयतं, तावादृतौ, यावन्न जानीतः, तेन भण्येते—एतादृशावेव युवां कोलिकौ, न किञ्चिज्जानीथः, तौ रुष्टौ उद्धावितौ, तेन गृहीत्वा तयोः नियुद्धं जानता सर्वे सन्धयो विसंयोजिताः, प्रथमं तावत्पिट्टितौ, तौ हन्यमानौ राटीं कुरुतः, परिजनो जानाति—स एष प्रव्रजितो हन्यमानो राटीं करोति, सोऽपि गतः, पश्चात्तैर्दृष्टौ, नैव जीवतो नैव म्रियेते, परं निरीक्षेते एकैकं दृष्ट्या, पश्चाद् राज्ञे शिष्टं पुरोहिताय च-यथा कोऽपि प्रव्रजितः, तेन द्वावपि जनौ विश्रृङ्खलय्य मुक्तौ, पश्चाद् राजा सर्वबलेनागतः प्रव्रजितानां मूले, सोऽपि साधुरेकपार्श्वे तिष्ठति परावर्तमानः, राजा आचार्याणां पादयोः पतितः, प्रसादमापद्यध्वं, आचार्यो भणति-अहं न जानामि, महाराज! अत्रैकः साधुः, प्राघूर्णकः, यदि परं तेन भवेत्, राजा तस्य मूलमागतः, प्रत्यभि—

[1]याओ य, ततो तेण साहुणा भणितो-धिरत्थु ते रायत्तणस्स, जो तुम अप्पणो पुत्तभंडाणवि निग्गहं न करेसि, पच्छा राया भणइ-पसाय करेह, भणइ-जइ पर पव्वयति तो ण मोक्खो, अन्नहा नत्थि, राइणा पुरोहिएण य भण्णइ-एव होउ, पव्वयंतु, पुच्छिआ भणंति-पव्वयामो, पुव्वं लोओ कतो, पच्छा मुक्का, पव्वइया। सो य रायपुत्तो निस्संकिओ चेव धम्मं करेइ, पुरोहियपुत्तस्स पुण जेमाइओ, अम्हे मइआए पव्वाविया, पच्छा ते दोऽवि कालं काऊण देवलोगेसु उववन्ना। इओ य कोसंबीए नयरीए तावसो णाम सेट्ठी, सो मरिऊण नियघरे सूयरो जाओ, जातिस्सरो, ततो तस्स चेयसगे पुत्तेहिं मारितो, पच्छा तहिं चेव घरे उरगो जाओ, तहिंपि आइस्सरो जातो, तत्थऽवि अंतो घरे मा खाहितित्ति मारितो, पच्छा पुणोऽवि पुत्तस्स पुत्तो जातो, तत्थवि जाई सरमाणो चिंतेइ-किहमहं अप्पणो सुण्हं अमति वाहरिहामि, पुत्तं वा तायति, [2]पच्छा मूयत्तणं करेइ, पच्छा महंतीभूओ साहूणं अल्लीणो, धम्मोऽणेण सुतो। इतो य सो धिज्जाइयदेवो महाविदेहे तित्थयरं पुच्छइ-किमहं सुलभबोहिओ दुल्लभबोहिओत्ति ?, ततो सामिणा भणितो-दुल्लभबोहिओऽसि, पुणोऽवि पुच्छइ-कत्थऽहं उववज्जिउकामो ?, भगवया भण्णइ-कोसंबीए मूयस्स भाया भविस्ससि, सो य मूओ पव्वइस्सइ, सो देवो भगवंतं वंदिऊण गओ मूयगसगासं, तस्स सो बहुयं दव्वजायं दाऊण भणइ अहं तुज्झ पिउघरे उववज्जि-

1 जातश्च, ततस्तेन साधुना भणितं-धिगस्तु तव राजत्वं, यस्त्वमात्मन पुत्रभाण्डानामपि निग्रहं न करोषि, पश्चाद् राजा भणति-प्रसादं कुरु, भणति-यदि परं प्रव्रजत स्तदाऽनयोर्मोक्षः, अन्यथा नास्ति, राज्ञा पुरोहितेन च भण्यते—एवं भवतु, प्रव्रजतां पृष्टौ भणतः—प्रव्रजाव, पूर्वं लोचः कृतः, पश्चान्मुक्तौ, प्रव्रजितौ। स च राजपुत्रो निःशङ्कित एव धर्मं करोति, पुरोहितपुत्रस्य पुनर्जातिमदः, भावौ बलात्प्रव्राजितौ, एवं तौ द्वावपि कालं कृत्वा देवलोकेषूत्पन्नौ। इतश्च। कौशाम्ब्यां नगर्यां तापसो नाम श्रेष्ठी, स मृत्वा निजगृहे शूकरो जातः, जातिस्मरः, ततस्तस्यैव दिवसे पुत्रैर्मारितः, पश्चात्तत्रैव गृहे उरगो जातः, तत्रापि जातिस्मरो जातः, तत्रापि अन्तर्गृहे मा खादीदिति मारितः, पश्चात्पुनरपि पुत्रस्य पुत्रो जातः, तत्रापि जातिं स्मरंश्चिन्तयति-कथमहं आत्मनः स्नुषामम्बामिति व्याहरामि, पुत्रं वा तातमिति २ पश्चान्मूकत्वं करोति, पश्चात् महद्भूतः साधुनाश्रितः, धर्मोऽनेन श्रुतः, । इतश्च स द्विजातीयदेवो

कय, जेण ण सक्केति उट्ठिउ, सव्ववेज्जेहिं पञ्चक्खातो, सो देवो डोंवरूव काऊण घोसतो हिंडइ—अहं वेज्जो सव्ववाही उवसमेमि, सो भणइ-मज्झ पोट्ट सज्झवेहि, तेण भणिय-तुब्भं असज्झो वाही, यदि पर तुम मम चेव ओलग्गसि तो ते सिज्झावेमि, सो भणति-वच्चामि, तेण सज्झवितो, [1]गतो तेण सद्धिं, तेण तस्स सत्थकोसगो अल्लवितो, सो ताए देवमायाए अतीव भारितो, जाव पव्वइया एगमि पएसे पढति, विज्जेण भण्णइ-जइ पव्वयसि तो मुयामि, सो तेण भारेण अतीव परितावेज्जतो चिंतेइ-वरमे पव्वइउ, भणइ-पव्वयामि, पव्वइओ, देवे गतेणाचिरस्स उप्पव्वइओ, तेण देवेण ओहिणा पिच्छिउण सो चेव से पुणोऽवि वाही कओ, तेणेव उवाएण पुणोऽवि पव्वाविओ, एव एक्कसिं दो तिन्नि वारा उप्पव्वइतो, तइया वाराए गच्छइ देवोऽवि तेणेव सम, तणभार गहाय पलित्तय गाम पविसति, तेण भण्णइ-किं तणभारएण पलित्त गाम पविससि?, तेण भण्णइ-कह तुम कोहमाणमायालोभसपलित्त गिहिवास पविससि?, तहावि न संबुज्झइ, पच्छा दोऽवि गच्छन्ति, नवर देवो अडवीए उप्पहेण सपट्ठितो, तेण भण्णइ-कह पत्तो तं पथ मोत्तूण पविससि?, [2]देवेणं भण्णइ-कह तुमं मोक्खपह

---

१ गतस्तेन सार्धं, तेन तस्मिन् शस्त्रकोपक आश्रयित, स तया देवमायया अतीव भारित, यावत् प्रव्रजिता एकस्मिन् प्रदेशे पठन्ति, वैद्येन भण्यते-प्रव्रजसि तदा मुञ्चामि, स तेन भारेण अतीव परिताप्यमानश्चिन्तयति-वरं मे प्रव्रजितु, भणति-प्रव्रजामि, प्रव्रजितो, देवे गतेऽचिरेणोत्प्रव्रजित, तेन देवेनावधिना दृष्ट्वा स एव तस्य पुनरपि व्याधि कृत, तेनैवोपायेन पुनरपि प्रव्राजित, एव सकृत् द्वौ त्रीन् वारान् उत्प्रव्रजित, तृतीये वारे गच्छति देवोऽपि तेनैव सम तृणभारं गृहीत्वा प्रदीप्त ग्राम प्रविशति, तेन भण्यते—किं तृणभारेण प्रदीप्त ग्राम प्रविशसि?, तेन भण्यते—कथ त्व क्रोधमानमायालोभसप्रदीप्त गृहिवास प्रविशसि?, तथापि न सबुध्यते, पश्चात् द्वावपि गच्छत, नवरं देवोऽटव्यामुत्पथेन सप्रस्थित, तेन भण्यते—कथमितस्त्व पन्थानं मुक्त्वा प्रविशसि?,

२ देवेन भण्यते-कथं त्व मोक्षपथं मुक्त्वा ससाराटवीं प्रविशसि?, तथापि न सबुध्यते, पुनरेकस्मिन् देवकुले व्यन्तरोऽर्चितोऽधस्तात्पतति, स भणति—अहो व्यन्तरोऽधन्यो-ऽपुण्यश्च य उपरि कृतोऽर्चितश्च अध पतति, तेन देवेन भण्यते—अहो त्वमप्यधन्यो य उपरि स्थापितोऽर्चनीये च स्थाने पुन

सो भणइ–अहो मोत्तूणं संसाराडविं पविससि?, तहावि न संवुज्झइ, पुणो एगंमि देवकुले वाणमंतरो अच्चितो हिट्ठाहुत्तो पडइ, तेण देवेण भणइ–अहो! तुमंपि अधण्णो वाणमंतरो! अधण्णो अपुण्णो य जो उवरिहुत्तो कओ अच्चियओ य हेट्ठाहुत्तो पडइ, तेण देवेण भणइ–अहो! तुमंपि पुव्वभवो जो उप्पराहुत्तो ठविओ अच्चणिज्जे य ठाणे पुणो पुणो उप्पव्वयसि, तेण भण्णइ–कोऽसि तुमं?, तेण मूयगरूवं दंसियं, पुव्वभवो से कहितो, तो सो भणइ–को पच्चओ?, जहाऽहं देवो आसि, पच्छा सो देवो तं गहाय गओ वेयड्ढपव्वयं, सिद्धाययणं कूडं च, तत्थ तेण पुव्वं चेव संगारो कतिल्लओ जहा–यदि अहं न संवुज्झेज्ज तो एयं ममच्चयं कुंडलजुयलं णामयंकियं सिद्धाययणपुक्खरिणीए दरिसिज्जासि, तेण से दंसियं, सो तं कुंडलं सनामकियं पिच्छिऊण जाइस्सरो जातो, संबुद्धो पव्वइतो जाओ, संजमे य से रती जाया, पुव्वं अरती आसि, पच्छा रती जाया ॥ उत्पन्नसंयमारतेश्च स्त्रीभिरुपनिमन्त्र्यमाणस्य तदभिलाष प्रादुःष्यादत-स्तत्परीषहमाह—

**संगो एस मणुस्साणं, जाओ लोगंसि इत्थिओ। जस्स एया परिण्णाया, सुकडं तस्स सामण्णं १६ ॥सूत्रम्॥**

व्याख्या—सजन्ति–आसक्तिमनुभवन्ति रागादिवशगा जन्तवोऽत्रेति सङ्गः 'एषः' अनन्तरं वक्ष्यमाणो 'मनुष्याणां' पुरुषाणां, तमेवाह—'या' इत्यविशेषाभिधानं ततो याः काश्चन मानुष्यो देव्यस्तिरश्च्यो वा, 'लोगंसि'त्ति लोके तिर्यग्लोकादौ 'स्त्रियो' नार्यश्च, एताश्च हावभावादिभिः अत्यन्तमासक्तिहेतवो मनुष्याणामित्येवमुक्तम्, अन्यथा हि गीतादिष्वपि सजन्त्येव मनुष्याः; मनुष्यो-

पुनरुत्प्रव्रजसि, तेन भण्यते—कोऽसि त्वं?, तेन मूकरूपं दर्शितं, पूर्वभवश्च तस्मै कथितः, ततः स भणति–कः प्रत्ययः?, यथाऽहं देव आसं, पश्चात्स देवस्तं गृहीत्वा गतो वैताढ्यपर्वतं, सिद्धायतनकूटं च, तत्र तेन पूर्वं चैव संकेतः कृतो यथा—यद्यहं न संबुध्येय तदैतत् मामकीनं कुण्डलयुगलं नामाङ्कितं सिद्धायतन-पुष्करिण्यां दर्शयेः. तेन तस्मै दर्शितं, स तत् कुण्डलं स्वनामाङ्कितं प्रेक्ष्य जातिस्मरो जातः, संबुद्धः प्रव्रजितो जातः संयमे च

१ रतिर्जाता, पूर्वमरतिरासीत्, पश्चाद्रतिर्जाता।

पदान च तेषामेव मेथुनसंज्ञातिरेकः प्रज्ञापनादौ प्ररूपित इति, अत किमित्याह—'यस्य' इति यते 'एता.' स्त्रिय परीति-सर्व प्रकारं ज्ञाताः परिज्ञाता, तत्र ज्ञपरिज्ञयेह परत्र च महानर्थहेतुतया विदिता, तथा चागम —[1]" विभूसा इत्थिससग्गी, पणीय रस भोयण। णरस्सऽत्तगवेसिस्स, विस तालउड जहा ॥१॥" प्रत्याख्यानपरिज्ञया च, तत एव च प्रत्याख्याता, 'सुकडं' ति सुकृत सुष्ठुनुष्ठित, पाठान्तरत —'सुकरं' वा सुखेनैवानुष्ठातु शक्य 'तस्स' त्ति सुब्व्यत्ययात्तेन 'सामण्णं ति श्रामण्य-व्रत, विमुक्त भवति ?-अवद्यहेतुत्यागो हि व्रत, रागद्वेषात्रेय च तत्त्वतस्तद्धेतु, उक्तनीतितश्च न स्त्रीभ्य पर तन्मूलमिति तत्प्रत्याख्यानत एव सुकरत्व श्रामण्यस्य, यथोक्तनीतित स्त्रिय एव दुस्त्यजा, ततस्तत्त्यागे त्यक्तमेवापरमिति तत्प्रत्याख्यानतः सुकरत्व श्रामण्यस्योच्यते, वक्ष्यति हि—[2]"एए उ सगे सम इक्कमित्ता, सुदुत्तरा चेव हवंति सेसा। जहा महासागरमुत्तरित्ता, णई भवे अवि गगासमाणा ॥ १ ॥" इति सूत्रार्थ ॥ १६ ॥ अत किं विधेयमित्याह—

एवमाणाय मेहावी, पंकभूयाउ इत्थीओ। नो ताहिं विणिहण्णिज्जा, चरे अत्तगवेसए ॥ १७ ॥ (सूत्रम्)

व्याख्या—'एवम्' इत्यनन्तरोक्तेन प्रकारेणात्यन्तासक्तिहेतुत्वलक्षणेन 'आज्ञाय' स्वरूपाभिज्ञाता अवगम्य 'मेधावी' अवधारण शक्तिमान् पङ्क —कर्दम तद्भूता -मुक्तिपथप्रवृत्तानां विघ्नधकत्वेन मालिन्यहेतुत्वेन च तदुपमा, दुरवधारणार्थं, तत पङ्कभूता एव स्त्रिय, पठ्यते च-'परमादाय' मेहावी जहा एया लहुस्सग त्ति 'एवम्', अनन्तर एव वक्ष्यमाणमर्थम् 'आदाय बुध्द्या गृहीत्वा मेधावी तमेवाह-'यथे'त्युपदर्शने, 'एता' स्त्रिय 'लहुस्सग त्ति तुच्छाशयत्वादिना लघ्व्य', तत किमित्याह—'नो' नैव 'ताभि.' स्त्रीभि' 'विनिहन्यात्' विशेषेण-सयमजीवितव्यव्यपरोपणात्मकेनातिशयेन च—सामस्त्यतदुच्छेदरूपेणातिपातयेत्, आत्मानमिति

1 विभूषा स्त्रीसंसर्गः प्रणितरसभोजनम्। नरस्यात्मगवेषिणो विषं तालपुटं यथा ॥ १ ॥ 2 एतांस्तु सङ्गान् समतिक्रम्य सुखोत्तारा एव भवन्ति शेषाः। यथा महासागरमुत्तीर्य नदी भवेदपि गङ्गासमाना ॥ १ ॥

गम्यते, कृत्यमाह–'चरेत्' धर्मानुष्ठानमसेवेत, आत्मानं गवेषयते–कथं मयाऽऽत्मा भवाब्धिस्तारणीय इत्यन्वेषयते आत्मगवेषकः, 'सिद्धिः स्वरूपापत्ति'रिति वचनात् सिद्धिर्वा आत्मा, ततः कथं ममासौ स्यादित्यन्वेषकः आत्मगवेषको, यद्वा आत्मानमेव गवेषयते इत्यात्मगवेषकः, किमुक्तं भवति ?–चित्रालङ्कारशालिनीरपि स्त्रियोऽवलोक्य तद्दृग्न्यासस्य दुष्टतावगमात् झगिति ताभ्यो दृगुपसंहारत आत्माऽन्वेष्टैव भवति, उक्तं हि—"[1]चित्तभित्तिं ण णिज्झाए, नारिं वा सुअलंकियं। भक्खरंपिव दट्ठूणं, दिट्ठिं पडिसमाहरे ॥ १ ॥" इति सूत्रार्थः ॥ १७ ॥ सम्प्रति प्रतिमाद्वारं विवृण्वन् 'यस्यैताः परिज्ञाता' इत्यादिसूत्रसूचितं चैदंयुगीनजनदार्ढ्योत्पादकं दृष्टान्तमाह—

उसभपुरं रायगिहं पाडलिपुत्तस्स होइ उप्पत्ती । नंदे सगडाले थूलभद्द सिरिए वररुई य ॥ १०० ॥
तिण्हं अणगाराणं अभिग्गहो आसि चउण्ह मासाणं । वसहीमित्तनिमित्तं को कहिं वुत्थो ? निसामेह ॥१०१॥
गणियाघरम्मि इक्को वुत्थो वीओ उ वग्घवसहीए । सप्पवसहीइ तइओ को दुक्करकारओ इत्थं ? ॥ १०२ ॥
वग्घो वा सप्पो वा सरीरपीडाकरा उ भइयव्वा । नाणं व दंसणं वा चरित्तं (यं) व न पचला भित्तुं ॥ १०३ ॥
भयवंपि थूलभद्दो तिक्खे चंकम्मिओ न उण छिन्नो । अग्गिसिहाए वुत्थो चाउम्मासे न उण दड्ढो ॥ १०४ ॥
अन्नोऽवि य अणगारो भणमाणोऽहंपि थूलभद्दसमो । कंवलओ चंदणयाइ मइलिओ एगराईए ॥ १०५ ॥

---

1 भित्तिचित्रं न निध्यायेत्, नारीं वा स्वलङ्कृताम् । भास्करमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत् ॥ १ ॥

व्याख्या—कुसुमपुर राजगृह पाटलिपुत्रस्य भवत्युत्पत्ति, नन्द शकडाल स्थूलभद्रः सिरियको वररुचिश्च, त्रयाणामनगाराणां अभिग्रह आसीत् 'चउण्ह मासाण सुव्वयस्थायतुर्षु मासेषु धरातिमात्रनिमित्त, क कुत्रोषित. १, निशाभयत-गणिकागृह एको, द्वितीय उषितस्तु व्याघ्रवसतौ, सर्पवसतौ, तृतीय, को दुष्करकारकोऽत्र ?, तेषु मध्ये व्याघ्रो वा सर्पो वा शरीरपीडाकरो तु भवन्यौ, ज्ञान वा दर्शन वा चारित्र वा न प्रत्यञ्चो भेत्तुं, भगवानपि स्थूलभद्र तीक्ष्णे-निशितासिधारादौ चङ्क्रमितो न पुनश्छिन्न, अग्निशिखायामुषितश्चातुर्मास्यां न पुनर्दग्ध, अन्योऽपि चानगारो भणप्यहमपि स्थूलभद्रसमः कम्बलरत्नदिनिकायाम्-उच्चारभूमौ प्रविनित इति गाथापदार्थः ॥ १००—१०५ ॥ एतदर्थस्तु वृद्धसम्प्रदायादवसेय, स चायम्—

'पुव्विं खिइपइट्ठियं णाम नयरं, तत्थ वत्थुमि खीणे चणगपुरं णिविट्ठं, ततो उसहपुरं, ततो रायगिहं, ततो चंपा, ततो पाडलिपुत्तं इच्चाइ भाणियव्वं जाव सगडाले पंचत्तमुवगते णंदेण सिरितो भणितो—कुमारामच्चत्तणं पडिवज्जाहि, सो भणइ-मम भाया जेट्ठो थूलभद्दो बारसमं वरिसं गणियाघरं पविट्ठस्स, सो सद्दावितो भणइ-चिंतेमि, राया भणइ-[2]असोगवणियाए चिंतेहि,

[1] पूर्वं क्षितिप्रतिष्ठितं नाम नगरं तत्र वस्तुनि क्षीणे चणकपुरं निविष्टं, ततः ऋषभपुरं, ततो राजगृहं, ततश्चम्पा, ततः पाटलीपुत्रमित्यादि भणितव्यं यावत् शकटाले पञ्चत्वमुपगते नन्देन श्रीयको भणित—कुमारामात्यत्वं प्रतिपद्यस्व, स भणति-मम भ्राता ज्येष्ठः स्थूलभद्रो द्वादशं वर्षं गणिकागृहं प्रविष्टस्य, स शब्दितो भणति-चिन्तयामि, राजा भणति—

२. अशोकवनिकायां चिन्तय, स तत्रानिगत्य चिन्तयति-कीदृशी भोगकार्ये व्याक्षिप्तानां ?, पुनरपि नरके यातव्यं भविष्यतीति, एते नाम परिणाम-दुरन्ता भोगा इति स्वमतीहितं नेच्छं कृत्वा शरत् कम्बलरत्नं छित्वा रजोहरणं कृत्वा राज्ञो मूलं गत, एतावच्चिन्तितं, राजा भणति—सुचिन्तितं, विनिर्गत, राजा चिन्तयति—पश्यामि किं कपटेन गणिकागृहं प्रविशति न वेति ?, प्रासादतलगत प्रेक्षते, नवरं-मृतककलेवरात् जनोऽपसरति, मुखानि च स्थगयति, स मध्येन गत, राजा भणति—निर्विण्णकामभोगो ... गत, स्थूलभद्रस्वाम्यपि सम्भूतविजयानां मूले

सो तत्थ अतिगतो चिंतेति-केरिसं भोगकज्जं वक्खित्ताणं?, पुणरवि णरगं जातियव्वं होहित्ति, एए णाम परिणामदुस्सहा भोगत्ति पंचमुट्ठियं लोयं काऊण पाऊयं कंबलरयणं छिंदत्ता रओहरणं काउं रण्णो मूलं गतो, एयं चिंतियं, राया भणइ-सुचिंतियं, विणिग्गतो, राया चिंतेइ-पिच्छामि किं कवडत्तणेण गणियाघरं पविस्सइ ण वत्ति? पासायतलगओ पेच्छइ, नवरं मयगकलेवरस्स जणो ओसरइ, मुहाणि य ठपइ, सो मज्झेण गतो, राया भणइ-णिव्विण्णकामभोगो भगवंति सिरिओ ठावितो। सो संभूयगविजयस्स मूले पव्वतितो, थूलभद्दसामीवि संभूयविजयाणं मूले घोरागारं तवं करेइ, विहरंता पाडलिपुत्तं आगया, तिण्णि अणगारा अभिग्गहे गिण्हंति-एक्को सीहगुहाए, [1]तं पेहंतओ सीहो उवसंतो, अन्नो सप्पगुहाए, सोऽवि दिट्ठीविसो उवसंतो, थूलभद्दो कोसाघरे, सा तुट्ठा, परीसहपराजिओ आगओत्ति, भणइ-किं करेमि?, उज्जाणघरे ठाणं देहि, दिन्नं, रत्तिं सव्वालङ्कारविभूसिया आगया, चाडुयं पकया, सो मंदरोपमो अकंपो, ताहे सब्भावेण पडिसुणेइ, धम्मो कहितो, साविगा जाया, भणति-जति रायवसेणं अन्नेणं समं वसेज्जा, इयरहा बंभचारिणीवयं गिण्हति। ताहे सीहगुहाओ आगओ चत्तरि मासे उववासं काऊणं, आइरि-

घोराकारं तपः करोति, विहरन्तः पाटलीपुत्रमागताः, त्रयोऽनगारा अभिग्रहान् गृह्णन्ति-एकः सिंहगुहायां,

[1] तं प्रेक्षमाणः सिंह उपशान्तः, अन्यः सर्पबिले, सोऽपि दृष्टिविष उपशान्तः, स्थूलभद्रः कोशागृहे, सा तुष्टा, परीषहपराजित आगत इति, भणति-किं करोमि?, उद्यानगृहे स्थानं देहि, दत्तं, रात्रौ सर्वालङ्कारविभूषिता आगता, चाटु प्रकृता, स मन्दरोपमोऽकम्प्रः, तदा सद्भावेन प्रतिशृणोति, धर्मः कथितः, श्राविका जाता, भणति—यदि राजवशेनान्येन समं वसेयम्, इतरथा ब्रह्मचारिणीव्रतं गृह्णाति। तदा सिंहगुहाया आगतश्चतुरो मासान् उपवासं कृत्वा, आचार्यैरीषदिलभ्युत्थितः, भणितश्च-स्वागतं दुष्करकारकस्येति, एवं सर्पबिलसत्कोऽपि, स्थूलभद्रस्वामि तत्रैव गणिकागृहे भिक्षां गृह्णाति, सोऽपि चतुर्षु मासेषु पूर्णेषु आगतः, आचार्याः संभ्रमेणोत्थिताः, भणितश्च-स्वागतं तेऽतिदुष्करदुष्करकारकस्येति, तौ भणतो द्वावपि-पश्यत आचार्या रागं वहन्ति अमात्यपुत्र इति, द्वितीये वर्षारात्रे

पहि ईसत्ति अभुट्ठिओ, भणिओ य-सागय दुक्करकारगस्सत्ति, एव भणंतेऽवि, थूलभद्दसामी तत्थेव गणियाघरे भिक्खं गिण्हइ, सोऽवि चउमासेसु पुण्णेसु आगतो, आयरिया संभमेण उट्ठिया, भणिओ य-सागयं ते अइदुक्करदुक्करकारगस्सत्ति, ते भणंति दोण्णिवि-पेच्छह आयरिया राग वहति अमच्चपुत्तोत्ति, बितियए वरिसारत्ते [1]सीहगुहाखमणो भणति-गणियाघरं अभिग्गह गिण्हइ, आयरिया उवउत्ता, वारिओ, अपडिसुणतो गतो, वसही मग्गिआ, दिण्णा, सा सब्भावेण ओरालिय सरीरा विभूसिया या, सुणति धम्म, सो तीसे सरीरे अज्झोववण्णो ओभासइ, सा ण इच्छति, भणति-जति नवरि किंचि देसि, किं देमि ?, सयसहस्सं, सो मग्गिउमारद्धो, णेपालविसये सावओ, जो तहिं जाइ तस्स सयसहस्समुल्लं कंबलं देइ, तहिं गतो, तेण दिण्णं सहुरायाणपणत्ति, पगतय चोरेहिं पथो पढो, सउणो वासति-सयसहस्सं एति, चोरसेणावई जाणइ, नवरि सजय पेच्छइ, चोलीओ, पुणो वासति-सयसहस्स गत, तेण सेणावइणा गतूण पलोइओ, सब्भावे पुच्छिओ भणति-अत्थि कंबलो, गणियाए णेमि, मुक्को गतो, तीसे दिण्णो, ताए चंदणिकाए छूढो, सो भणइ-मा विणासेहि, सा [2]भणइ-तुमपि एरिसओ चेव होहिसि, उवसा-

---

[1] सिंहगुहाक्षपणो भणति-गणिकागृहं व्रजामीति अभिग्रहं गृह्णाति, आचार्या उपयुक्ता, वारित, अप्रतिशृण्वन् गत, वसतिर्मार्गिता, दत्ता, सा सद्भा वेनोदारशरीरा विभूषिता अविभूषिता वा, शृणोति धर्मं, स तस्याः शरीरेऽध्युपपन्न, अवभासयति (याचते) सा नेच्छति, भणति-यदि नवरं किञ्चिद्ददासि, किं ददामि ?, शतसहस्रं, स मार्गयितुमारब्ध, नेपालविषये श्रावक यस्तत्र याति तस्मै शतसहस्रमूल्यं कम्बलं ददाति, तत्र गत, तेन दत्तं श्राद्धेन राज्ञेति, एकत्र चौरै पन्था॰ यद, शकुनो वाश्यति-शतसहस्रमिति, चौरसेनापतिर्जानाति, नवरं संयत प्रेक्षते, चलित, पुनर्वाश्यति-शतसहस्र गतं, तेन सेनापतिना गत्वा प्रलो कित, सद्भाव पृष्टो भणति-अस्ति कम्बल, गणिकायै नयामि, मुक्तो गत, तस्यै दत्त, तया चन्दनिकायां (वर्चोगृहे) निक्षिप्त, स भणति-मा विनीनशः, सा

[2] भणति-त्वमप्येतादृश एव भविष्यसि, उपशाम्यति लब्धबुद्धि, इच्छामि अनुशास्ति, गत, पुनरालोच्य विहरति। आचार्येण भणित -एवं दुष्कर-दुष्करकारक स्थूलभद्र पूर्वं गणिका दृष्टेति, इदानीं श्राद्धी जाता, भद्रदायी त्वया प्रार्थितेति ज्ञात्वा, एवमेव विहरन्ति। सा गणिका रथिकाय राज्ञा

मेति लद्धवुद्धी, इच्छामि अणुसट्ठिं, गतो, पुणो आलोएत्ता विहरइ । आयरिएणं भणिओ-एवं दुक्करदुक्करकारओ थूलभद्दो पुव्विं खरिका (दुअक्खरिया) इच्छइ, इदाणीं सड्ढी जाया, अदिट्ठदोसा तुमे पत्थियत्ति उवालद्धो, एवं चेव विहरंति । सा गणिका रहियस्स रण्णा दिण्णा, तं अक्खाणं जहा णमोकारे । जहा थूलभद्देणित्थीपरीसहो अहियासितो तहा अहियासियव्वो, ण उ जहा तेण णो अहियासितोत्ति ॥ अयं चैकत्र वसतस्तथा स्त्रीजनसंसर्गतो मन्दसत्त्वस्य भवति अतो नैकस्थेन भाव्यं, किन्तु चर्यापरीषहः सोढव्य इति तमाह—

एग एव चरे लाढे, अभिभूय परीसहे । गामे वा नगरे वावि, णिगमे वा रायहाणीए ॥ १८ ॥ (सूत्रम्)

व्याख्या—'एक एवे' ति रागद्वेषविरहितः 'चरेत्' अप्रतिवद्धविहारेण विहरेत्, सहायवैकल्यतो वैकस्तथाविधगीतार्थो, यथोक्तम्—"ण [1]या लभिज्जा णिउणं सहायं, गुणाहियं वा गुणतो समं वा । एक्कोऽवि पावाइं विवज्जयंतो, विहरेज्ज कामेसु असज्जमाणो ॥ १ ॥" 'लाढे' त्ति लाढयति प्रासुकैषणीयाहारेण साधुगुणैर्वाऽऽत्मानं यापयतीति लाढः, प्रशंसाभिधायि वा देशीपदमेतत्, पठ्यते च-'एग एगे चरे लाढं' ति तत्र चैकः-असहायः प्रतिमाप्रतिपन्नादिः स चैको रागादिवैकल्याद् 'अभिभूय' निर्जित्य 'परीषहान् क्षुदादीन् क्व पुनश्चरेदित्याह—'ग्रामे' चोक्तरूपे 'नगरे वा' करविरहितसन्निवेशे 'अपिः' पूरणे 'निगमे वा' वणिग्निवासे 'राजधान्यां' वा प्रसिद्धायाम्, उभयत्र वाशब्दानुवृत्तेः, मडम्बाद्युपलक्षणं चैतद्, आग्रहाभावं चानेनाहेति सूत्रार्थः ॥१८॥

पुनः प्रस्तुतमेवाह—

---

दत्ता, तदाख्यानकं यथा नमस्कारे (आवश्यकवृत्तौ) । यथा स्थूलभद्रेण स्त्रीपरिषहोऽध्यासितस्तथाऽध्यासितव्यः, न तु यथा तेन नाध्यासित इति । २ न चापि लभेत निपुणं सहायं, गुणाधिकं वा गुणतः समं वा । एकोऽपि पापानि विवर्जयन्, विहरेत् कामेषु असजन् ॥ १ ॥

असमाणो चरे भिक्खू, नेव कुज्जा परिग्गहं । असंसत्तो गिहत्थेहिं, अनिकेओ परिव्वए ॥१९॥ (सूत्रम्)

व्याख्या—न विद्यते समानोऽस्य गृहिष्वाश्रयामूर्च्छितत्वेन अन्यतीर्थिकेषु वाऽनियतविहारादिनेत्यसमान—असदृशो, यद्वा समान-साहङ्कारो न तथेत्यसमान, अथवा '(अ)समाणो' त्ति प्राकृतत्वादसंनिवासन्, यत्रास्ते तत्राप्यसंनिहित एवेति हृदय सन्निहितो हि सनः स्वाश्रयस्योदन्तमावहति अय तु न तथेत्येवंविध सन् 'चरेत्, अप्रतिबद्धविहारतया विहरेत् 'भिक्षु' यति कथमेतत् स्यादित्याह—नैव कुर्यात् 'परिग्रहं' ग्रामादिषु ममत्वबुध्यात्मकम्, यथाह च—[1]"गामे कुले वा नगरे व देसे, ममत्त भावं ण कहिंचि कुज्जा', इदमपि यथा स्यात्तथाह—असंसक्त' असम्बद्धो 'गृहस्थै' गृहिभि 'अनिकेत' अविद्यमानगृहो, नैकत्र बद्धास्पद, 'परिव्रजेत्' सर्वतो विहरेत्, न (ना) नियतदेशादौ गृहिसम्पर्के, एकत्र बद्धास्पदत्वे नियतदेशादिविहारितया वा स्यादपि ममत्वबुद्धि, तदभावे तु निरवकाशैवेयमिति भाव इति सूत्रार्थ ॥ १९ ॥ अत्र च शिष्यद्वारमनुसरन् 'असमाणो चरे' इत्यादिसूत्रसूचितमुदाहरणमाह—

कोल्लयरे वत्थव्वो दत्तो सीसो अ हिंडओ तस्स । उवहरइ धाइपिंडं अगुलिजलणा य मादिव्वं ॥ १०६ ॥

व्याख्या—'कोल्लयरे' कुल्लयरनाम्नि नगरे वास्तव्य, आचार्य इति शेष, दत्त शिष्यश्च हिण्डक तस्य उपहरति धात्री पिण्डमगुलिज्वलनाद्य सादेव्यमिति गाथाक्षरार्थं ॥ १०६ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेय, स चायम्—[2]'कोल्लयरे नयरे

---

१ ग्राम कुले वा नगरे वा देशे, ममत्वभावं न कुत्रचित्कुर्यात् । २ कोल्लकर नगरे वास्तव्या संगमस्थविरा आचार्या दुर्भिक्षे ते सयता त्रिमृण, तन्नगरं नव भागान् कृत्वा परि क्षीणजङ्घाबला विहरन्ति नगरान्तरा च तेषु क्लिश्यन्ता, तथा शिष्या स्मा नामाहिण्डक चिरेण कालेनोदन्तवाहक आगत

वत्थव्वा सङ्गमथेरा आयरिया, दुब्भिक्खे तेहिं संजया विसज्जिया, तं णगरं णवभागे काऊण जंघाबलपरिहीणा विहरन्ति, णगरदेवया य तेसिं किर उवसंता, तेसिं सीसो दत्तो नामं आहिंडितो, चिरेणं काळेणं उदंतवाहतो आगतो, सो तेसिं पडिस्सयं ण पविट्ठो णिययावासत्ति, भिक्खवेलाए उवग्गाहियं हिंडंनाणं संकिलिस्सति, कुंढो सड्ढकुलाइं ण दावेइत्ति, तेहिं णायं, पगत्थ सिट्ठिकुले रेवतियाए गहियतो दारतो, छम्मासा रोवंतस्स, आइरिएहिं चप्पुडिया 'कया, मा रोवत्ति, वाणमंतरीए मुक्को, तेहिं तुट्ठेहिं पडिलाहिया जहिच्छिपणं, सो विसज्जितो, एयाणि कुलाणित्ति, आयरिया सुचिरं हिंडिऊण अंतपंतं गहाय आगया, समुद्दिट्ठा, आवस्सए आलोयणाए आलोएहि, भणति-तुब्भेहिं समं हिंडिओ मि, धाईपिंडो ते भुत्तो, भणति-अह सुहुमाइं पिच्छहत्ति पदुट्ठो, देवयाए अड्ढरत्ते वासं अंधकारो य विगुव्वितो, एसो हीलेइत्ति, आयरिएहिं भणिओ-अतीहित्ति, सो भणइ-अंधकारोत्ति, आयरिएहिं अंगुली दाइया, सा पज्जलिया, आउट्टो आलोएइ, आयरियावि से णवभागे कहेंति ॥ ततश्च यथा महात्मभिरमीभिः सङ्गमस्थविरैश्चर्यापरीषहोऽध्यासितः तथान्यैरपि अध्यासितव्य इति ॥ यथा चायं ग्रामादिष्वप्रतिबद्धेनाधिसह्यते एवं नैषेधिकीपरीषहोऽपि शरीरादिष्वप्रतिबद्धेनाधिसहनीय इति तमाह—

---

स तेषां प्रतिश्रयं न प्रविष्टो नित्यवास इति, भिक्षावेलायामौपग्रहिकं हिण्डमानयोः संक्लिश्यति, कुण्ढः श्राद्धकुलानि न दर्शयतीति, तैर्ज्ञातम्, एकस्य श्रेष्ठिकुले रेवतिकया गृहीतो दारकः, षण्मासा रुदतः, आचार्यैश्चप्पुटिका कृता—मा रोदिहीति, व्यन्तर्या मुक्तः, तैस्तुष्टैः प्रतिलम्भिता यथेप्सितेन, स विसृष्टः, एतानि कुलानीति, आचार्याः सुचिरं हिण्डित्वाऽन्तप्रान्तं गृहीत्वा आगताः, भुक्ताः, आवश्यके आलोचनायामालोचय, भणति—युष्माभिः समं हिण्डितोऽस्मि, धात्रीपिण्डस्त्वया भुक्तः, भणति—अथ सूक्ष्माणि प्रेक्षध्वमिति प्रद्विष्टः, देवतया अर्धरात्रे वर्षा अन्धकारं च विकुर्वितं, एष हीलतीति, आचार्यैर्भणितः—आयाहीति, स भणति—अन्धकारमिति, आचार्यैरङ्गुलिर्दर्शिता, सा प्रज्वलिता, आवृत्त आलोचयति, आचार्या अपि तस्मै नव भागान् कथयन्ति

तयाऽत्यन्तोत्सिक्तरिपुवत् अभिमुखीकुर्युरिव, यथैते सज्जा वयं तत् प्रगुणीभूयाभिमुखैः स्थेयमिति, यद्वा सोपस्कारत्वात् सूत्राणामुपसर्गाः सम्भवेयुः ततस्तानभिधारयेत्-किमेते ममाचलितचेतसः कर्तुमलमिति चिन्तयेत्, पठ्यते च-'उवसग्गभयं भवे' इति सुगमं, 'शङ्काभीत इति' तत्कृतापकारशङ्कातो भीतः-त्रस्तो 'न गच्छेत्' न यायादुत्थाय, कोऽर्थः?-तत् स्थानमपहाय अन्यदपरं आस्यते अस्मिन्निति आसनं-स्थानमिति सूत्रार्थः ॥ २१ ॥ अग्निद्वारमधुना, तत्र च 'शङ्काभीतो न गच्छेज्ज'त्ति सूत्रावयवमर्थतः स्पृशन् उदाहरणमाह—

**निक्खंतो गयउराओ कुरुदत्तसुओ गओ य साकेयं । पडिमाट्ठियस्स कुडिया आगया अग्गि जालिंति १०७**

व्याख्या—'निष्क्रान्तः' प्रव्रजितो गजपुरात् कुरुदत्तसुतो गतश्च साकेतं प्रतिमास्थितस्य 'कुडिय' त्ति हृतगवेपका (आगता) अग्निं शिरसि ज्वालयन्ति इति गाथाक्षरार्थः ॥ १०७ ॥ भावार्थस्तु वृद्धसम्प्रदायादवसेयः, स चायम्—

[1]हत्थिणाउरे णयरे कुरूदत्तसुत्तो णाम इब्भपुत्तो तहारूवाणं थेराणमंतिए पव्वतितो, सो कयाइ एगल्लविहारपडिमं पडिवण्णो, साएयस्स णयरस्स अदूरसामंते चरिमा ओगाढा, तत्थेव पडिमं ठिओ चच्चरे, तओ एगाता [2]गामातो गावितो हिरियातो,

---

१ हस्तिनापुरे नगरे कुरुदत्तसुतो नामेभ्यपुत्रस्तथारूपाणां स्थविराणामन्तिके प्रव्रजितः, स कदाचित् एकाकिविहारप्रतिमां प्रतिपन्नः, साकेतस्य नगरस्यादूरसमीपे चरमा (पौरुषी) अवगाढा, तत्रैव प्रतिमां स्थितश्चत्वरे, तत एकस्मात् । २ ग्रामात् गावो हृताः, तेनावकाशेन नीताः, यावन्मार्गयमाणा हृतगवेपका आगताः, यावत्साधुर्दृष्टः, तत्र द्वौ पन्थानौ, पश्चात्ते न जानन्ति-कतरेण मार्गेण नीताः, ते साधुं पृच्छन्ति-कतरेण मार्गेण नीताः ?, तदा स भगवान् न व्याहरति, तै रुष्टैर्न व्याहरतीतिकृत्वा तस्य शीर्षे मृत्तिकया पालीं बध्वा चितागतानङ्गारान् गृहीत्वा (ते) शीर्षे क्षिप्ताः, गताश्च, स भगवान् सम्यक् सहते

तेण ओगासेण णीयातो, जाव मग्गमाणा कुढिया आगया, जाव साहू दिट्ठो, तत्थ दुवे पथा, पच्छा ते ण जाणंति-कयरेण मग्गेण णीयातो ?, ते साहु पुच्छंति-कयरेण मग्गेण णीयाओ ?, ताहे सो भगव न वाहरति, तेहिं रुट्ठेहिं न वाहरतित्तिकाऊण तस्स सीसे मट्टियाए पालिं बंधिऊण चियागते अगारे घेत्तूण सीसे छूढा, गया य, सो भगव सम्मं सहइ ॥ तेन स यथा सम्यक् सोढो नैषेधिकीपरीषह तथाऽन्यैरपि साधुभि सहनीय इति ॥ नैषेधिकीतश्च स्वाध्यायादि कृत्वा शय्या प्रति निवर्त्तेता तन्न परीषहमाह—

उच्चावयाहिं सिज्जाहिं, तवस्सी भिक्खू थामवं । णाइवेलं विहण्णिज्जा, पावदिट्ठी विहण्णइ ॥२२॥ (सूत्रम्)

व्याख्या—ऊर्ध्वं चिता उच्चा, उपलक्षणमेतत्, यद्वा शीतातपनिवारकत्वादिगुणे शय्यान्तरोपरिस्थितत्वेनोच्चा, तद्विपरीतास्त्ववचा, अनयोर्द्वन्द्वे उच्चावचा, नानाप्रकारा वोच्चावचास्ताभि 'शय्याभि' वसतिभि 'तपस्वी' प्रशस्यतपोऽन्वितो भिक्षुः प्राग्वत्, 'स्थामवान्' शीतातपादिसहनं प्रति सामर्थ्यवान् 'नातिवेलं' स्वाध्यायादिवेलातिक्रमेण 'विहन्यात्' इनेगंतावपि गृहस्थाद शीतादिभिरभिभूत इति स्थानान्तरं गच्छेत्, यद्वा 'अतिवेलाम्' अन्यसमयातिशायिनीं मर्यादा-समतारूपामुच्चा शय्या मयाऽऽप्ताहो ! सभाग्योऽहं यस्येदृशी सकलर्तुसुखोत्पादिनी मम शय्येति अवचावाप्तौ वा अहो ! मम मन्दभाग्यता येन शय्यामपि शीतादिनिवारिका न लभे इति हर्षविषादादिना 'न विहन्यात्' नोल्लङ्घयेत्, किमित्येवमुपदिश्यत इत्याह-'पावदिट्ठी विहन्नइ' त्ति प्राग्वदिति सूत्रार्थ ॥ २२ ॥ किं पुन कुर्यादित्याह—

पइरिक्कमुवस्सयं लद्धुं, कल्लाणं अदुव पावगं । किमेगराय करिस्सइ ?, एवं तत्थऽहियासए ॥ २३ ॥ (सूत्रम्)

व्याख्या—'प्रतिरिक्त' स्त्र्यादिविरहितत्वेन विविक्तमव्याबाध वा 'उपाश्रयं' वसतिं 'लब्ध्वा' प्राप्य 'कल्याण' शोभनम् 'अदु

व'त्ति अथवा 'पापं' पांशूत्कराकीर्णत्वादिभिरशोभनं, किं ?, न किञ्चित्, सुखं दुःखं चेति गम्यते, एषा रात्रिर्गत तदेकरात्रं 'करिष्यति' विधास्यति ? कल्याणः पापको वाऽऽश्रय इति प्रक्रमः, कोऽभिप्रायः ?-केचित् पुरोपनिहितमुक्ता निनिचमणिकिरणोद्योतितासु महाभन-समृद्धासु महारजतरजतोपचितभित्तिषु मणिनिर्मितोरुस्तम्भासुतदितरे तु जीर्णविशीर्णमकटकरकूणापटलसंवृतद्वारासु तृणकचवर-तुषमूषकोत्करपांशुबुसभस्लविण्मूत्रावसकीर्णासु श्वनकुलमार्जारमूत्रप्रसेकदुर्गन्धिष्वाजन्म वसतिषु वसन्ति, मम त्वनैवेयमीदृशी श्वोऽन्या भविष्यतीति किमत्र हर्षेण विषादेन वा ?, मया हि धर्मनिर्वाहाय विविक्तत्वमेवाश्रयस्यान्वेष्यं, किमपरेण ?, 'एलमिं'त्यमुना प्रकारेण 'तत्रे' ति कल्याणे पापके वाऽऽश्रये 'अध्यासीत' सुखं दुःखं वाऽधिसहेत, प्रतिमाकल्पिकापेक्षं चैकरात्रमिति, स्थविर-कल्पिकापेक्षया तु कतिपया रात्रयः, दिवसोपलक्षणं च रात्रिग्रहणमिति सूत्रार्थः ॥ २३ ॥ अत्र तिं गच्छारम्, इह च 'कल्लाणं पावगं' ति सूत्रावयवमर्थतः स्पृशन् उदाहरणमाह निर्युक्तिकारः—

कोसंबी जण्णदत्तो सोमदत्तो य सोमदेवो य । आयरिय सोमभूई दुण्हंपि य होइ णायव्वं ॥ १०८ ॥

सन्नाइगमण वियडवेरग्गा दोवि ते नईतीरे । पाओवगया नईपूरएण उदहिं तु उववीया ॥ १०९ ॥

व्याख्या—कौशाम्बी यज्ञदत्तः सोमदत्तश्च सोमदेवश्च आचार्यः सोमभूतिर्द्वयोरपि च भवति ज्ञातव्यः, ज्ञातिगमनं विकट-वैराग्यात् द्वावपि तौ नदीतीरे पादपोपगतौ नदीपूरकेणोदधिं नूतनीतौ इति गाथाद्वयाक्षरार्थः ॥ १०८-१०९ ॥ भावार्थस्तु वृद्ध-सम्प्रदायादवसेयः, स चायम्—

'कोसंबीए णयरीए जण्णदत्तो भिज्जाइओ, तस्स दो पुत्ता-सोमदत्तो सोमदेवो य, ते दोऽवि निव्विण्णकामभोगा पव्वतिया

1 कौशाम्ब्यां नगर्यां यज्ञदत्तो द्विजातीयः, तस्य द्वौ पुत्रौ-सोमदत्तः सोमदेवश्च, तौ द्वावपि निर्विण्णकामभोगौ सोमभूतिसकाशे प्रव्रजितौ,

गोमभूइ अणगारस्स अंतिए बहुस्सुया बहुआगमा य जाया, ते अन्नया य सघायपडिमागया, तेसिं मायापियरो उज्जेणिं गते लिया, तहिं च विसए धिज्जाइणो वियड आवियंति, तेहिं तेसिं वियड अन्नेण दव्वेण मेलेऊण 'दिण्ण, केऽवि भणंति-वियड चेव अयाणताण दिण्ण, तेहिंवि य त विसेस अयाणमाणेहिं पीय, पच्छा वियडत्ता जाया, ते चिंतेंति-अम्हेहिं अजुत्त कय, पमाओ एस, पर भत्तं पच्चक्खायंति ते पगाए णदीए तीरे तीसे कट्ठाण उवरिं पाओवगया, तत्थ अकाले वरिसं जाय, पूरो य आगतो, हरिया, वुज्झमाणा य उदएण समुद्द णीया। तेहिं सम्म अहियासिय, अहाउय पालिय, सेज्जापरीसहो अहियासितो एमायिसमाहिं सेज्जाहिं। एव एसो अहियासियव्वोत्ति ॥ शय्यास्थितस्य तदुपद्रवेऽप्युदासीनस्य तथाविधशय्यातरोऽन्यो वा कश्चिदाक्रोशेदितस्तत्परीषहमाह—

'अक्कोसेज्ज' परो भिक्खु, न तेसिं पडिसंजले। सरिसो होई बालाणं, तम्हा भिक्खू न संजले ॥२४॥ (सूत्रम्)

व्याख्या—'अक्कोसेज्ज' त्ति आक्रोशेत्-तिरस्कुर्यात् 'पर' अन्यो धर्मापेक्षया धर्मबाह्य आत्मव्यतिरिक्तो वा 'भिक्खुं' यतिं, यथा धिग्मुण्ड! किमिह त्वमागतोऽसीति ?, 'न तेसिं' ति सुपो वचनस्य च व्यत्ययात्त तस्मै 'प्रतिसञ्ज्वलेत्' निर्यातनं प्रति भूतघायोद्दानतः सञ्ज्वलते, तन्निर्यातनार्थं देहदाहकोऽहितमन्याक्रोशाभिघातादिभिरग्निवच्च दीप्येत, सञ्ज्वलनकोपमपि न

बहुश्रुतौ बह्वागमौ च जातौ, तौ अन्यदा च संतानपर्शीसागतौ, तयोर्मातापितरावुज्जयिनीं गतौ, तत्र च विषये द्विजातीया विकटमापिबन्ति, तैस्ताभ्यां विकटमन्येन द्रव्येण मेलयित्वा

१ दत्त केचिद्भणन्ति-विकटमेव अजानानाभ्यां दत्तं, ताभ्यामपि च तद्विशेषमजानानाभ्यां पीत, पश्चाद्विकटार्त्तौ जातौ, तौ चिन्तयत -आवाभ्यामयुक्तं कृतं, प्रमाद एष, वरं भक्त प्रत्याख्यानमिति तावेकस्या नद्यास्तीरे तस्या काष्ठानामुपरि पादपोपगतौ, तत्राकाले वर्षा जाता, पूरश्चागत, हृतौ उह्यमानौ चोदकेन समुद्र नीतौ। ताभ्यां सम्यगध्यासित, यथायुष्क पालित, शय्यापरीषहोऽध्यासित सममविषम शि शय्याभि, एवमेषोऽध्यासितव्य इति।

कुर्यादिति सञ्ज्वलेदित्युपादानं, किमेवमुपदिश्यत इत्याह-'सदृशः' समानो भवति, सञ्ज्वलन्निति प्रक्रमः, केषां ?-'बालानाम्' अज्ञानां, तथाविधक्षपकवत्, यथा-कश्चित् क्षपको देवतया गुणैरावर्जितया सततमभिवन्द्यते, उच्यते च-मम कार्यमावेदनीयम्, अन्यदैकेन धिग्जातिना सह योद्धुमारब्धः, तेन च बलवता क्षुत्क्षामशरीरो भुवि पातितः ताडितश्च, रात्रौ देवता वन्दितुमायाता, क्षपकस्तूष्णीमास्ते, ततश्चासौ देवतयाऽभिहितो-भगवन्! किं मयाऽपराद्धं ?, स प्राह-न तस्य त्वया दुरात्मनो ममापकारिणः किञ्चित्कृतं, सा चावादीत्-न मया विशेषः कोऽप्युपलब्धो यथाऽयं श्रमणोऽयं च धिग्जातिरिति, यतः कोपाविष्टौ द्वावपि समानौ सम्पन्नाविति, ततः सती प्रेरणेति प्रतिपन्नं क्षपकेणेति । उक्तमेवार्थं निगमयितुमाह-'तम्ह' त्ति यस्मात्सदृशो भवति बालानां तस्माद्भिक्षुर्न सञ्ज्वलेदिति सूत्रार्थः ॥ २४ ॥ कृत्योपदेशमाह—

**सोच्चा णं फरुसा भासा, दारुणे गामकंटए । तुसिणीओ उवेक्खिज्जा, ण ताओ मणसी करे ॥ २५ ॥ (सूत्रम्)**

व्याख्या—'श्रुत्वा' आकर्ण्य, णमिति वाक्यालङ्कारे 'परुषाः' कर्कशाः 'भाषा' गिरो दारयन्ति मन्दसत्त्वानां संयमविषयां धृतिमिति दारुणाः ताः, ग्रामः-इन्द्रियग्रामस्तस्य कण्टका इव ग्रामकण्टकाः-प्रतिकूलशब्दादयः, कण्टकत्वं चैषां दुःखोत्पादकत्वेन मुक्तिमार्गप्रवृत्तिविघ्नहेतुतया च, तदेकदेशत्वेन परुषभाषा अपि तथोक्ताः, भाषाविशेषणत्वेऽपि चात्राविष्टलिङ्गत्वात्पुँल्लिङ्गता, 'तूष्णीकः' तूष्णीशीलो न कोपात् प्रतिपरुषभाषी, एवंविधश्च "[1]जो सहइ हु गामकंटए अक्कोसपहारतज्जणाओ य' त्ति इत्यागमं परिभावयन् 'उपेक्षेत' अवधीरयेत्, प्रक्रमात्परुषभाषा एव, कथमित्याह-न ता मनसि कुर्यात्, तद्भाषिणि द्वेषाकरणेनेति भाव इति सूत्रार्थः ॥ २५ ॥ इदानीं मुद्गरद्वारं व्याचिख्यासुः 'सुच्चा णन्ति सूत्रसूचितमुदाहरणमाह—

१ यः सहते ग्रामकण्टकान् आक्रोशप्रहारान् तर्जनाश्च ।

रायगिहि मालगारो अज्जुणओ तस्स भज्ज खंदसिरी। मुग्गरपाणी गोट्ठी सुदंसणो वंदओ णीइ ॥ ११० ॥

व्याख्या—राजगृहे मालाकारोऽर्जुनकस्तस्य भार्या स्कन्दश्री मुद्गरपाणिर्यक्षो गोष्ठी सुदर्शनो वन्दको 'निरेति'-वन्दनार्थं निर्गच्छतीति गाथाक्षरार्थः ॥ ११० ॥ भावार्थस्तु सम्प्रदायादवगम्य, स चायम्—

'रायगिहे णयरे अज्जुणगो नाम मालागारो परिवसति, तस्स भज्जा खंदसिरी णामा, तस्स रायगिहस्स णयरस्स बहिया मोग्गरपाणी नाम जक्खे अज्जुणगस्स कुलदेवय, तस्स मालागारस्स आरामस्स पन्थे चेव जक्खो। अन्नया खंदसिरी भत्तं तस्स भत्तारस्स णेउं गया, अग्गाइ पुप्फाइ घेत्तु घरं गच्छति, मोग्गरपाणीघरए य ठियाए दुल्ललियाए [2]गोट्ठीएहिं छहिं जणेहिं दिट्ठा, ते भणंति-एसा अज्जुणमालागारस्स भज्जाऽपडिरूवा, गिण्हामो य, तेहिं सा गहिया, छवि जणा तस्स जक्खस्स पुरतो भोगे भुजंति, सोऽवि मालागारो णिच्चकालमेव अग्गेहिं वरेहिं पुप्फेहिं जक्खं अच्चेइ, अच्चिउकामो ततो आगच्छइ, ताए ते भणिया-एसो

१ राजगृहे नगरे अर्जुनो नाम मालाकारः परिवसति, तस्य भार्या स्कन्दश्रीर्नाम्नी, तस्माद्राजगृहान्नगराद्बहिर्मुद्गरपाणिर्नाम यक्ष अर्जुनस्य कुलदेवता, तस्य मालाकारस्य आरामस्य पथि चैव यक्ष। अन्यदा स्कन्दश्री भक्तं तस्मै भर्त्रे नेतुं गता, अग्र्याणि पुष्पाणि गृहीत्वा गृहं गच्छति, मुद्गरपाणिगृहे च स्थितायां दुर्ललितायां। २ गोष्ठीकैः षड्भिर्जनैर्दृष्टा ते भणन्ति-एषाऽर्जुनमालाकारस्य भार्याऽप्रतिरूपा, गृह्णीम एनां ते सा गृहीता, षडपि जना स्तस्य यक्षस्य पुरतो भोगान् भुञ्जन्ति, सोऽपि मालाकारो नित्यकालमेवाग्र्यैर्वरैः पुष्पैरभ्यर्चयति, अर्चितुकामस्ततः आगच्छति, तया ते भणिता-एष मालाकार आगच्छति तत् यूयं मां किं विमुञ्चत, तैर्भणितम्-एतस्याः प्रियं, तैर्भणितं-मालाकारं बध्नीमः, तैः स बद्धोऽवकोटकेन, यक्षस्य पुरतो बद्ध्वा पुरत एव तस्य भार्यां भुञ्जन्ति, सा च तस्य भर्तुर्मोहोत्पादकानि स्त्रीशब्दानि करोति पश्चात् स मालाकारश्चिन्तयति-एनमहं यक्षं नित्यकालमेव अग्र्यैर्वरैः पुष्पैरर्चयामि तथाप्य स्मैतस्य पुरत एवैवं काम्यामि यद्यत्र कोऽपि यक्षोऽभविष्यत्तदाहं नाक्रमिष्यम्, एवं सुव्यक्तमेतत् काष्ठं नात्र कोऽपि मुद्गरपाणिर्यक्षः तदा स यक्षोऽनुकम्पयन्

मालागारो आगच्छति तो तुब्भे मए किं विसज्जेहिह ?, तेहिं णायं-एयाए पियं, तेहिं भणियं-मालागारं बंधामो, तेहिं सो बद्धो अवहोडेण, जक्खस्स पुरतो वंधिऊण पुरतो चेव से भारियं भुंजंति, सा य तस्स भत्तारस्स मोहुप्पाइयाइं इत्थिसद्दाइं करेइ, पच्छा सो मालागारो चिंतेति-एयं अहं जक्खं णिच्चकालमेव अग्गेहिं वरेहिं पुप्फेहिं अच्चेमि, तहावि अहं एयस्स पुरतो चेव एवं कीरामि, जइ एत्थ कोइ जक्खो होंतो तो अहं न कीरंतो, एवं सुव्वत्तं एयं कट्ठं णत्थि एत्थ कोइ मोग्गरपाणी जक्खो, ताहे सो जक्खो अणुकंपंतो [1]मालागारस्स सरीरमणुपविट्ठो, तडतडस्स बंधे छेत्तूण लोहमयं पलसहस्सनिप्फन्नं मोग्गरं गहाय अण्णाइट्ठो समाणो ते छप्पि इत्थिसत्तमे पुरिसे घाएति, एवं दिणे दिणे छ इत्थिसत्तमे पुरिसे घायमाणे विहरइ, जणवतोऽवि रायगिहातो णगरातो ण ताव णिग्गच्छइ जाव सत्त घातियाइं । तेणं कालेणं तेणं समएणं भगवं महावीरे समोसरिए, जाव सुदंसणो सेट्ठी वंदतो णीइ, अज्जुणएण दिट्ठो, सागारपडिमं ठिओ, न तरइ अक्कमिउं, परिपेरंतेहि भमित्ता परिसंतो, अज्जुणतो सुदंसणं अणमिसाए दिट्ठीए अवलोएइ, जक्खोऽवि मोग्गरं गहाय पडिगओ, पडितो अज्जुणतो, उट्ठिओ य तं पुच्छइ-कहिं गच्छसि ?, भणइ-सामिं वंदिउं, सोऽवि गतो, धम्मं सोच्चा पव्वतितो । रायगिहे [2]भिक्खं हिंडंतो सयणमारगोत्ति लोएणं अक्कोसिज्जइ णाणापगारेहिं

(परायत्तः) मन् तान् षडपि स्त्रीसप्त-

१ मालाकारस्य शरीरमनुप्रविष्टः, त्रटत्रटदितिबन्धान् छित्त्वा लोहमयं सहस्रपलनिष्पन्नं मुद्गरं गृहीत्वा अन्याविष्टः यावत्सप्त घातितानि । मान् पुरुषान् घातयति, एवं दिनेदिने षट् स्त्रीसप्तमान् पुरुषान् घातयन् विचरति, जनपदोऽपि राजगृहात् नगरात् तावन्निर्गच्छति न शक्नोत्याक्रमितुं, तस्मिन् काले तस्मिन् समये भगवान् महावीरः समवसृतः, यावत् सुदर्शनः श्रेष्ठि वन्दको निरेति, अर्जुनेन दृष्टः, साकारप्रतिमां स्थितः, उत्थितश्च तं पृच्छति—क्व परिपर्यन्तेषु भ्रान्त्वा परिश्रान्तः, अर्जुनः सुदर्शनमनिमेषया दृष्ट्या अवलोकयति, यक्षोऽपि मुद्गरं गृहीत्वा प्रतिगतः, पतितोऽर्जुनः, गच्छसि ?, भणति स्वामिन वन्दितुं, सोऽपि गतः, धर्मं श्रुत्वा प्रव्रजितः राजगृहे ।

२ भिक्षां हिण्डमानः स्वजनमारक इति लोकेनाक्रोश्यते नानाप्रकारैराक्रोशैः स सम्यक् सहते, सहमानस्य केवलज्ञानं समुत्पन्नम् ॥

मक्रोसेहिं, सो सम्मं सहइ, सहतस्स वेचलणाण समुप्पण्ण ॥ एवमन्यैरपि साधुभिः आक्रोशपरीषहः सोढव्य ॥ कश्चिदाक्रोश मात्रेणातुष्यन्नधमाधमो वधमपि विदध्यादिति वधपरीषहमाह—

**हओ ण संजले भिक्खू, मणंपि णो पउस्सए। तितिक्खं परमं णच्चा, भिक्खुधम्मंमि चिंतए ॥ २६ ॥ (सूत्रम्)**

व्याख्या—'हत' यष्ट्यादिभि ताडितो 'न सञ्ज्वलेत्' कायतः कम्पनप्रत्याहननादिना वचनतश्च प्रत्याक्रोशदानादिना भृशं ज्वलन्तमिवात्मानं नोपदर्शयेत्, भिक्षुः 'मनः' चित्त तदपि 'न प्रदूषयेत्' न कोपतो विकृतं कुर्वीत, किन्तु 'तितिक्षां' क्षमां—'धर्मस्य श्या मूलं न चाक्षमावान् दयां समाधत्ते। तस्माद्य क्षान्तिपरः स साधयत्युत्तमं धर्मम् ॥ १ ॥ इत्यादिवचनतः 'परमां' धर्म साधनं प्रति प्रकर्षवर्ती 'ज्ञात्वा' अवगम्य 'भिक्षुधर्मं' यतिधर्मं, यद्वा भिक्षुधर्मं क्षान्त्यादिकं वस्तुस्वरूप वा चिन्तयेत्, यथा—क्षमा मूल एव मुनिधर्मः, मय चास्मन्निमित्तं कर्मोपचिनोति मत्समदोष एवायम्, अतो नेमं प्रति कोप उचित इति सूत्रार्थ ॥ २६ ॥ ममुमेव प्रकारान्तरेणाह—

**संमणं संजयं दंतं, हणिज्जा कोऽवि कत्थवि। नत्थि जीवस्स नासुत्ति, ण तं पेहे असाहुव ॥ २७ ॥ (सूत्रम्)**

व्याख्या—'समणं' श्रमणं सममनसं वा—तथाविधवधेऽपि धर्मं प्रति प्रहितचेतसं, श्रमणाश्च शाक्यादिरपि स्यादित्याह—'संयत' पृथ्व्यादिव्यापादननिवृत्तं, सोऽपि कदाचिल्लाभादिनिमित्त बाह्यवृत्त्येव सम्भवेदत आह—'दान्तम्' इन्द्रियनोइन्द्रियदमेन 'हन्यात्' ताडयेत्, 'कोऽपि' इति तथाविधोऽनार्यः 'कुत्रापि' ग्रामादौ, तत्र किं विधेयमित्याह—नास्ति 'जीवस्य' आत्मन उपयोगरूपस्य 'नाश' ममायः, तत्पर्यायविनाशरूपत्वेन हिंसाया अपि तत्र तथाभिधानाद्, 'इती'त्यस्माद्धेतोः न 'त'मिति घातकं प्रेक्षेत असाधुमर्हति यत्प्रेक्षणं भ्रुकुटिभङ्गादिगुणः तदसाधुवत्, किन्तु रिपुजयं प्रति सहायोऽयमितिधिया साधुवदेव प्रेक्षेतेति भाव, अथवा अपेक्षय

मानत्वान्न तं प्रेक्षेतापि असाधुना तुल्यं वर्त्तते इति असाधुवत्, किं पुनरपकारायोपतिष्ठेत् संक्लिश्नाति वा ?, असाधुर्हि सत्यां शक्तौ प्रत्यपकारायोपतिष्ठते असत्यां तु विकृतया दृशा पश्यति सङ्क्लेशं वा कुरुत इत्येवमभिधानं, पठ्यते च-'न य पेहे असाधुयं' ति चकारस्यापिशब्दार्थस्य भिन्नक्रमत्वात् प्रेक्षेतापि न चिन्तयेदपि न, काम् ?-'असाधुतां' तदुपरि द्रोहस्वभावतां, पठन्ति च-'एवं पेहिज्ज संजतो' इति सूत्रार्थः ॥ २७ ॥ अधुना वर्णेत्ति द्वारं, तत्र 'हतो न सञ्ज्वलेदि' त्यादि सूत्रमर्थतः स्पृशन्नुदाहरणमाह—

सावत्थी जियसत्तू धारणि देवी य खंदओ पुत्तो। धूआ पुरंदरजसा दत्ता सा दंडईरण्णो ॥ १११ ॥
मुणिसुव्वयंतेवासी खंदगपमुहा य कुंभकारकडे । देवी पुरंदरजसा दंडइ पालग मरूएय ॥ ११२ ॥
पंचसया जंतेणं वहिआ उ पुरोहिएण रुट्ठेणं । रागद्दोसतुलग्गं समकरणं चिंतयंतेहिं ॥ ११३ ॥

व्याख्या—श्रावस्ती जितशत्रुर्धारिणी देवी च स्कन्दकः पुत्रो दुहिता पुरन्दरयशा दत्ता सा दण्डकिराजाय, मुनिसुव्रतान्तेवासिनः स्कन्दकप्रमुखाश्च कुम्भकारकटे देवी पुरन्दरयशा दण्डकिः पालकः मरुकश्च पञ्च शतानि यन्त्रेण घातितानि तुः पूरणे पुरोहितेन रुष्टेन पालकेन रागद्वेषयोस्तुलाग्रमिव-तदनभिभाव्यत्वेन रागद्वेषतुलाग्रं 'समकरणं' माध्यस्थ्यपरिणामं भावयद्भिः, स्वकार्यं साधितमिति शेषः, इति गाथात्रयाक्षरार्थः ॥ १११-११२-११३ ॥ भावार्थस्तु सम्प्रदायादवसेयः, स चायम्—

[1]'सावत्थीए नयरीए जियसत्तूराया, धारिणी देवी, तीसे पुत्तो खंदओ णाम कुमारो, तस्स भगिणी पुरंदरजसा, सा कुंभ-

1 श्रावस्त्यां नगर्यां जितशत्रू राजा, धारिणी देवी, तस्याः पुत्रः स्कन्दको नाम कुमारः तस्य भगिनी पुरन्दरयशाः, सा कुम्भकारकटे नगरे दण्डकी नामराजा तस्मै दत्ता, तस्य च दण्डकिनो राज्ञः पालको नाम ब्राह्मणः पुरोहितः । अन्यदा श्रावस्त्यां मुनिसुव्रतस्वामी तीर्थंकरः समवसृतः, पर्षन्निर्गता, स्कन्दकोऽपि निर्गतः, धर्मं श्रुत्वा श्रावको जातः ।

सावत्थीए नयरे खंदगो नाम राया तस्स पिया, तस्स य खंदगस्स रण्णो पालगो णाम मरुतो पुरोहितो। अण्णया साचत्थीए मुणिसुव्वयसामी तित्थयरो समोसरिओ, परिसा निग्गया, खंदतोऽवि निग्गतो, धम्मं सोचा सावगो जाओ। अण्णया' सो पालगमरुतो दूयत्ताए आगतो सावत्थिं नयरिं, अत्थाणिमज्झे साहूण अवण्णं वयमाणो खंदएणं निप्पिट्ठपसिणवागरणो कतो, पतोसमावण्णो, तप्पभिइं चेव खंदगस्स छिद्दाणि चारपुरिसेहिं मग्गावितो विहरइ, जाव खंदगो पंचजणसएहिं कुमारोलग्गएहिं सद्धिं मुणिसुव्वय सामिसगासे पव्वतितो, बहुसुतो जातो, ताणि चेव से पंच सयाणि सीसत्ताए अणुण्णायाणि। अण्णया खंदओ सामिमापुच्छइ-वच्चामि भगिणीसगासं, सामिणा भणियं-उवसग्गो मारणंतितो, भणइ-आराहगा विराहगा वा? सामिणा भणियं-सव्वे आराहगा तुमं मोत्तुं, सो भणइ-लट्ठं, जदि एत्तिया आराहगा, गओ कुंभकारकडं, मरुएण जहिं उज्जाणे ठिओ तहिं आउहाणि णूमियाणि, रण्णो वुग्गाहिओ-जहा एस कुमारो परीसहपराइतो एएण उवाएण तुमं मारित्ता रज्जं गिण्हिहित्ति, जदि ते पच्चओ उज्जाणं' पलोएहि, आउहाणि ओलइयाणि दिट्ठाणि, ते बंधिऊण तस्स चेव पुरोहियस्स समप्पिया, तेण सव्वे पुरिसजंतेण पीलिया, तेहिं

१ अन्यदा स पालको ब्राह्मणो दूततायै आगत श्रावस्तीं नगरीम्, आस्थानिकामध्ये साधूनामवर्णं वदन् स्कन्दकेन निस्पृष्टप्रश्नव्याकरणः कृत, प्रद्वेषमापन्न, तत्प्रभृत्येव स्कन्दकस्य छिद्राणि चारपुरुषैर्मार्गयन् विहरति, यावत्स्कन्दक पञ्चभिर्जनशतै कुमारावलगकै सार्धं मुनिसुव्रतस्वामिसकाशे प्रव्रजित, बहुश्रुतो जात, तान्येव पञ्च शतानि तस्मै शिष्यतयाऽनुज्ञातानि। अन्यदा स्कन्दक स्वामिनमापृच्छति-व्रजामि भगिनीसकाशं स्वामिना भणितम्-उपसर्गो मारणान्तिक, भणति-आराधका विराधका वा? स्वामिना भणितं-सर्वे आराधकास्त्वां मुक्त्वा, स भणति-लष्टं, यद्येतावन्त आराधका, गत कुम्भकारकटं, मरुकेण यत्रोद्याने स्थित तत्रायुधानि स्थापितानि, राजा व्युद्ग्राहितः-यथैष कुमार परीषहपराजित एतेनोपायेन त्वां मारयित्वा राज्यं ग्रहीष्यतीति, यदि तव विश्वास

२ उद्याने प्रलोकय, आयुधान्यवलगितानि (गोपितानि) दृष्टानि ते बध्वा तस्मायेव पुरोहिताय समर्पिता, तेन सर्वे पुरुषयन्त्रेण पीडिताः, तैः

सम्मं अहियासियं, तेसिं केवलणाणं उप्पण्णं सिद्धा य। खंदतोऽवि पासे धरिओ, लोहियचिरिकाहिं भरिज्जंतो सव्वतो पच्छा जंते पीलितो णिदाणं काऊण अग्गिकुमारेसु उववण्णो। तंपि से रयहरणं रुहिरलित्तं पुरिसहत्थोत्ति काउं गिद्धेहिं पुरंदरजसाते पुरतो पाडियं, सावि तद्दिवसं अधिर्ति करेइ जहा साधू ण दीसंति, तं च णाए दिट्ठं, पच्चभिन्नाओ य कंवलो, णिसिज्जातो छिण्णातो, ताए चेव दिण्णो, ताए नायं-जहा ते मारिया, ताए खिसितो राया-पाव! विणट्ठोऽसि, ताए चिंतियं-पव्वयामि, देवेहिं मुणिसुव्वयसगासं नीया, तेणवि देवेण णगरं दड्ढं सजणव्वयं, अज्जवि दंडगारण्णंति भण्णइ। अरण्णस्स य वणाख्या भवति, तेन द्वारगाथायां वनमित्युक्तम्। एत्थ तेहिं साहूहिं [1]वहपरीसहो अहियासितो सम्मं, एवं अहियासेयव्वं, ण जहा खंवएण णाहियासियं॥ परैरभिहतस्य च तथाविधौषधादि ग्रासादि च सदोपयोगि यतेर्याचितमेव भवतीति याञ्चापरीषहमाह—

**दुक्करं खलु भो! णिच्चं, अणगारस्स भिक्खुणो। सव्वं से जाइयं होइ, नत्थि किंचि अजाइयं॥ २८॥ (सूत्रम)**

व्याख्या—दुःखेन क्रियत इति दुष्करं-दुरनुष्ठानं, खलुर्विशेषणे निरुपकारिण इति विशेषं द्योतयति, 'भो' इत्यामन्त्रणे 'नित्यं' सर्वकालं, यावज्जीवमित्यर्थः, अनागारस्य भिक्षोरिति च प्राग्वत्, किं तत् दुष्करमित्याह-यत् 'सर्वम्' आहारोपकरणादि 'से' तस्य याचितं भवति, नास्ति 'किञ्चिद्' दन्तशोधनाद्यपि अयाचितं, ततः सर्वस्यापि वस्तुनो याचनमिति गम्यमानेन विशेष्येण

सम्यगध्यासितं, तेषां केवलज्ञानमुत्पन्नं सिद्धाश्च। स्कन्दकोऽपि पार्श्वे धृतः रुधिरच्छटाभिर्भ्रियमाणः सर्वतः पश्चात् यन्त्रे पीलितो निदानं कृत्वाऽग्निकुमारेषूत्पन्नः। तदपि तस्य रजोहरणं रुधिरलिप्तं पुरुषहस्त इतिकृत्वा गृध्रैः पुरन्दरयशसः पुरतः पातितं, साऽपितद्दिवसेऽधृतिं करोति यथा साधवो न दृश्यन्ते, तयानया दृष्टं, प्रत्यभिज्ञातश्च कम्बलः निषद्यारछिन्नाः तयैव दत्तः, तया ज्ञातं यथा ते मारिताः, तया खिंसितो राजा-पाप! विनष्टोऽसि, तया चिन्तितं-प्रव्रजामि, देवैर्मुनिसुव्रतसकाशं नीता, तेनापि देवेन नगरं दग्धं सजनमजम् अद्यापि दण्डकारण्यमिति भण्यते। अरण्यस्य च वनाख्या भवति। अत्र तैः साधुभि—

[1] वधपरीषहोऽध्यासितः सम्यक्, एवमध्यासितव्यं, न यथा स्कन्दकेन नाध्यासितम्।

दुष्कराभिलाषश्च इति सूत्रार्थं ॥ २८ ॥ ततश्च—

गोयरग्गपविट्ठस्स, पाणी नो सुप्पसारए। सेओ अगारवासोत्ति, इइ भिक्खू न चिंतए ॥ २९ ॥ (सूत्रम्)

व्याख्या—गोरिव चरणं गोचरो, यथाऽसौ परिचितापरिचितविशेषमपहायैव प्रवर्तते तथा साधुरपि भिक्षार्थं, तस्याग्र-प्रधानं यतोऽसौ एषणायुक्तो गृह्णाति न पुनर्गौरिव यथा कथञ्चित्, तस्मिन्, प्रविष्टो गोचराग्रप्रविष्टः तस्य, 'पाणि' हस्तो 'नो' नैव सुखेन प्रसार्यते पिण्डादिग्रहणार्थं प्रसार्यत इति सुप्रसारः स एव सुप्रसारकः, कथं हि निरुपकारिणः परं प्रतिदिनं प्रणयितुं शक्य', अतस्तत्क्लेशात्त्व भिक्षाक्रमणाद् 'इति' एवमालोच्य 'श्रेयान्' अतिशयप्रशस्यः 'अगारवासो' गार्हस्थ्यं, तत्र हि न कश्चि याच्यते, स्वभुजार्जितं च भोगादिकं स्वेच्छया भुज्यते, 'इति' एतदपि तु न चिन्तयेद्, यतो गृहवासो बहुसावद्यो निरयप्रवृत्त्यर्थं च ... , तत्र स्वपरयतनादिप्रवृत्तेभ्यो गृहिभ्यः पिण्डादिग्रहणं न्याय्यमिति भाव इति सूत्रार्थं ॥ २९ ॥ साम्प्रतं रामद्वारं, तत्र 'दुक्खं लद्धुं मोत्तुं' इति सूत्रमर्थतः सूत्रानुदाहरणमाह—

जायणपरीसहंमि पल्हेओ इत्थ होइ आहरणं।

व्याख्या—याञ्चापरिषहे पल्हेयोऽत्र भवत्याहरणम्-उदाहरणम्। अत्र सम्प्रदाय—

'अथ सो वासुदेवस्स वहतो सिद्धत्थेणं पडिबोहिओ बलदेवस्स सरीरस्स सक्कारेउं कयसामाइओ दिक्खं पडिपज्जिउं तुंगीसिहरे

१ सो दारं ...कम्म् २ अथ स वासुदेवस्य वहन् सिद्धार्थेन प्रतिबोधितः कृष्णस्य शरीरस्य सत्कारं (संस्कृत्य) कृतसामायिको दीक्षां प्रतिपद्य तुङ्गिशिखरे ... [illegible] ... भिक्षा ... न ग्रामे नगरे प्रविशति। तेन च आत्मा भिक्षा याचनापरीषह, ... [illegible] ... भिक्षा

तथं सप्पमाणो माणेण-काहिं भिक्खाए भिक्खट्टं अडीमं ?, तेण कट्टाहाराईण भिक्खं गिण्हइ, न गामं नयरं वा अल्लियति। तेण सो णाहियासितो आयणापरीसहो, एवं न कायव्वं, । अयं भणंति-थलदेवस्स भिक्खं 'भमन्तस्स बहुओ जणो तस्स रूवेणायक्खित्तो ण किंचि अन्नं जाणइ, तच्चितो चेव चिट्ठइ, तेण सो न हिंडइ गामागरादि, उज्जाणयपडियाहिंतो चेव भिक्खं आयतित्ति, एस जायणापरीसहो एसव्वो ॥ एवं शेषसाधुभिरपि याञ्चापरीषहः ॥ सोढव्यः ॥ याञ्चाप्रवृत्तश्च कदाचिल्लाभान्तरायदोषतो न लभेता-पीत्यलाभपरीषहमाह—

परेसु गासमेसिज्जा, भोयणे परिणिट्ठिए। लद्धे पिंडे 'आलद्धेज्जा, अलद्धे नाणुतप्पए ॥३०॥ (सूत्रम्)

व्याख्या—'परेषु' इति गृहस्थेषु 'ग्रासं' कवलम्, अनेन च मधुकरवृत्तिमाह, 'एषयेत्' गवेषयेत्, भुज्यत इति भोजनम्-ओदनादि तस्मिन् 'परिनिष्ठिते' सिद्धे, मा भूत्प्रथमगमनात्तदर्थं पाकादिप्रवृत्तिः, ततश्च 'लब्धे' गृहिभ्यः प्राप्ते 'पिण्डे' आहारे 'अलब्धे वा' अप्राप्ते वा नानुतप्येत संयतः, तद्यथा-अहो! ममाधन्यता यदहं न किञ्चिल्लभे, उपलक्षणत्वाल्लब्धे वा लभ्यमानाद्-मिति न हृष्येत्, यद्वा लब्धेऽप्यदल्पेऽनिष्टे वा सम्भवत्येवानुताप इति सूत्रार्थः ॥ ३० ॥ किमालम्ब्यनमालम्ब्य नानुतप्येनेत्याह—

अज्जेवाहं ण लब्भामि, अवि लाभो सुए सिया। जो एवं पडिसंविक्खे, अलाभो तं न तज्जए ॥३१॥ (सूत्रम्)

व्याख्या—'अद्यैव' अस्मिन्नेवाहन्यहं 'न लभे' न प्राप्नोमि, 'अपिः' सम्भावने, सम्भाव्यत एतत् 'लाभः' प्राप्तिः 'श्वः' आगा-

प्राम्यती बहुजनस्य रूपेणाक्षिप्ताः न किञ्चिदन्यत् जानाति, तच्चित्त एव तिष्ठति, तेन स न हिण्डते ग्रामाकरादिषु, उद्यानकपतिकादिभ्य एव भिक्षां याचते इति, एष याचनापरीषहः प्रभग्नः। 1. अलद्धे वा नाणुतप्पेज्ज संजए (टीका)

मिनि दिने 'स्याद्' भवेत्, उपलक्षणं श्व इत्यन्येद्युरन्यतरेद्युर्वा मा वा भूदित्यनास्थामाह, य 'एवम्' उक्तप्रकारेण 'पडिसंचिक्खे' त्ति प्रतिसमीक्षतेऽदीनमनाः अलाभमाश्रित्यालोचयति, 'अलाभः' अलाभपरीषहः तं 'न तर्जयति' नाभिभवति, अन्यथाभूतस्त्वभिभूयत इति भावः ॥ ३१ ॥ अत्र लौकिकमुदाहरणम्—

[1]'वासुदेवबलदेवसच्चगदारुगा अस्सवहियां अडवीए नग्गोहपायवस्स अहे रत्तिं वासोवगया, जामग्गहणं, दारुगस्स पढमो जामो, कोहो पिसायरूवं काऊण आगतो, दारुगं भणइ–आहारत्थीऽहं उवागओ, एए सुत्ते भक्खयामि, युद्धं वा देहि, दारुगेण भणियं–बाढं, तेण सह संपलग्गो, दारुगो य तं पिसायं जहा जहा न सक्केइ णिहणिउं तहा तहा रुस्सति, जहा जहा रुस्सइ तहा तहा सो कोहो वड्ढति, एवं सो दारुगो किच्छपाणो तं जामगं निव्वाहेइ, पच्छा सच्चगं उट्ठावेइ. सच्चगोऽवि तहेव पिसाएण किच्छपाणो कतो, ततिए जामे बलदेवं उट्ठवेइ, एवं बलदेवोऽवि [2]चउत्थे जामे वासुदेवं उट्ठवेइ, वासुदेवो तेण पिसाएण तहेव

१ वासुदेवबलदेवसत्यकदारुका अश्वापहृता अटव्यां न्यग्रोधपादपस्याधो रात्रौ वासमुपागताः, यामग्रहणं, दारुकस्य प्रथमो यामः, क्रोधः पिशाचरूपं कृत्वाऽऽगतः, दारुकं भणति–आहारार्थ्यहमुपागतः, एतान् सुप्तान् भक्षयामि, युद्धं वा देहि, दारुकेण भणितं–बाढं, तेन सह संप्रलग्नः, दारुकश्च तं पिशाचं यथा यथा न शक्नोति निहन्तुं तथा तथा रुष्यति, यथा यथा रुष्यति तथा तथा स क्रोधो वर्धते, एवं स दारुकः कृच्छ्रप्राणस्तं यामं निर्वहति, पश्चात्सत्यकमुत्थापयति, सत्यकोऽपि तथैव पिशाचेन कृच्छ्रप्राणः कृतः, तृतीये यामे बलदेवमुत्थापयति, एवं बलदेवोऽपि। २ चतुर्थे यामे वासुदेवमुत्थापयति, वासुदेवस्तेन पिशाचेन तथैव भणितः, वासुदेवो भणति–मामनिर्जित्य कथं मम सहायान् भक्षयिष्यसि?, युद्धं लग्नं, यथा यथा युध्यते पिशाचस्तथा तथा वासुदेवः अहो बलसंपन्नोऽयं मल्ल इति तुष्यति, यथा यथा तुष्यति तथा तथा पिशाचः परिहीयते, स तेनैव क्षपितः येन गृहीत्वा कट्यां (जङ्घायां) क्षिप्तः, प्रभाते तान् भिन्नजानुकूर्परान् पश्यति, केनेति पृष्टा भणन्ति–पिशाचेन, वासुदेवो भणति–स एष कोपः पिशाचरूपधारी मया प्रशान्ततया जितः, अक्षाया निष्कार्यं दर्शितः।

व्याख्या—'ज्ञात्वा' अधिगम्य 'उत्पत्तिकम् उद्भूतं, दुःखयति इति दुःखः प्रस्तावात् ज्वरादिरोगस्तं 'वेदनया' स्फोटग्रुग्रहाद्यनुभवरूपया दुःखेनार्त्तः-पीडितः क्रियते स दुःखार्त्तितः, एवंविधोऽपि 'अदीनः' अविक्लवः 'स्थापयेत्' दुःखार्त्तितत्वेन चलन्तीं स्थिरीकुर्यात् 'प्रज्ञां' स्वकर्म्मफलमेवैतदिति तत्त्वधियं, 'स्पृष्ट' इत्यपेर्लुप्तनिर्दिष्टत्वात् व्याप्तोऽपि राजमन्दादिभिः, यद्वा पुष्ट इव पुष्टो व्याधिभिरविक्लवतया 'तत्रेति' प्रज्ञास्थापने सति रोगोत्पाते वा 'अध्यासीत' अधिसहेत, प्रक्रमाद्रोगजनितदुःखमिति सूत्रार्थः ॥ ३२ ॥ स्यादेतत्-चिकित्सया किं न तदपनोदः क्रियते ? इत्याह—

**तेगिच्छं नाभिनंदिज्जा, संचिक्खऽत्तगवेसए । एयं खु तस्स सामण्णं, जं न कुज्जा न कारवे ॥ ३३ ॥ (सूत्रम्)**

व्याख्या—'चिकित्सां' रोगप्रतिकाररूपां 'नाभिनन्देत्' नानुमन्येत, अनुमतिनिषेधाच्च दूरापास्ते करणकारणे, 'समीक्ष्य' 'संचिक्खे' समाधिना स्वकर्मफलमेवैतत् भुज्यत इति पर्यालोच्य, यद्वा 'संचिक्ख'त्ति 'अचां सन्धि लोपौ बहुलमि'त्येकारलोपे 'संचिक्खे' किमित्येव-तिष्ठेत्, न कूजनकर्करायतादि कुर्यात्, आत्मानं-चारित्रात्मानं गवेषयति-मार्गयति कथमयं मम स्यादित्यात्मगवेषकः, श्रमणभावो मत आह—'एतद्' अनन्तरमभिधास्यमानं 'खु'त्ति खलु, स च यस्मादर्थः, ततो यस्मादेतत् 'तस्य' श्रमणस्य 'श्रामण्यं' 'जं न कुज्जा' यन्न कुर्यान्न कारयेत्, उपलक्षणत्वान्नानुमन्येत, प्रक्रमात् चिकित्सां, जिनकल्पिकाद्यपेक्षं चैतत्, स्थविरकल्पापेक्षया तु ततस्तां इत्यादौ सावद्यमिति गम्यते, अयमत्र भावः-यस्मात्करणादिभिः सावद्यपरिहार एव श्रामण्यं, मावद्या च प्रायश्चिकित्सा, नाभिनन्देद्, एतदप्यौत्सर्गिकम्, अपवादतस्तु सावद्याऽप्येषामियमनुमतैव, यदुक्तम्—"'काहं अछित्ति अदुवा अहीहं, तवोविहाणेण य उज्जमिस्सं । गणं व णीतीइ वि सारविस्सं, सालंबसेवी समुवेति मोक्खं ॥ १ ॥" इति सूत्रार्थः ॥ ३३ ॥ इदानीं भिक्षेति

१ करिष्याम्यच्छित्तिमथवाऽध्येष्ये तपोति (पत्र) धानेषु नोद्यंस्यामि । गणं वा नीत्या अपि सारयिष्यामि, सालम्बसेवी समुपैति मोक्षम् (गुप्तिम्)

वेनेयावष्टब्धश्चावृतश्च, एव जीवप्रदेशा अपि कर्मप्रदेशैरिति मुख्यपरिवेष्टनाभावेऽपि तेषां तत्परिवेष्टनमुच्यते, तर्हि स्फुटैवास्म दिष्टबन्धसिद्धिः, अस्माकमप्यनन्तकर्माणुवर्गणाभिरात्मप्रदेशानामुक्तरूपपरिवेष्टनस्यैव बन्धत्वेनेष्टत्वात्, आगमश्चात्र—[1]"एगमेगे आयपएसे अणंताणंताहिं कम्मवग्गणाहिं आवेढियपरिवेढियत्ति, ततश्च विपर्ययसाधनाद्विरुद्धो हेतुः, सकलजीवप्रदेशप्रचयपरिवेष्टने नेत्यस्मिन्नपि पक्षे भिन्नदेशकर्मग्रहणेन तथैव सिद्धान्तविरोधः, तथा तत्र बहिः प्रदेशबन्ध एव कर्मणः सम्भवति, ततश्च मलस्येव न तस्य भवान्तरानुवृत्तिः, एवं च पुनर्भवाभावः, सिद्धानां वा पुनर्भवाऽऽपत्तिः, न च मलस्य शरीरेण स्पृष्टतया दृष्टान्तवैषम्य, शरीरात्मप्रदेशानामन्योऽन्यमविभागेनावस्थानाद् अन्यथा हि भूणाऽऽस्पर्शाद्यनुभवाभावप्रसङ्गः, किञ्च—इयं देहान्तः सातादिवेदना सनिबन्धना निर्निबन्धना वा?, निर्निबन्धना चेत्किं न सिद्धानामपि?, सनिबन्धनत्वे च किं पयःपानादिदृष्टहेतुरेव यद्वा कर्म निबन्धनाऽनाऽपि?, यदाऽऽद्यः पक्षस्तर्हि बहिर्वेदनापि दृष्टा बाह्यहेतुकैवेति किं कर्मकल्पनया? अथ कर्महेतुकाऽपि तर्हि तत्किं यत्रैव स्थितं तत्रैव वेदनानिबन्धनमुतान्यत्रापि? यदि तत्रैव तर्हि त्वन्मतेन बहिरेवैतदवस्थितमित्यन्तः सातादिवेदनोच्छेदप्रसङ्गः, अथान्यत्रापि तद्वेदनानिबन्धनं तर्हि किं नैकात्मस्थितं सर्वात्मस्वपि?, उक्तं च—[2]"जइ वावि भिन्नदेसंपि वेयणं कुणइ कम्ममेयं ते। कह अन्नसरीरगयं ण वेयणं कुणति अन्नस्स? ॥ १ ॥" तथा च कृतनाशाकृताभ्यागमप्रसङ्गः, अथ येनैव कृतं तस्यैव तन्नि बन्धनं, तथापि पादवेदनाया शिरोवेदनाऽऽपत्तिः, अथ सञ्चारित्वात्तस्यान्तरप्यवस्थानमिति नान्तः सातादिवेदनोच्छेदप्रसङ्गः, एवं तर्हि न कञ्चुकतुल्यता, तस्य बहिरेव नियतत्वात्, युगपदुभयत्र वेदनाऽभावप्रसङ्गश्च, यथा च बहिः स्थमन्तः सञ्चारितया वेदना वेदनाहेतुरेवमन्तःस्थितं बहिःसञ्चारितया तद्धेतुरिति विपर्ययकल्पनाऽपि किं न?, नियामकाभावात्, सञ्चारित्वे च कर्मणो वायो

१ एकैक आत्मप्रदेशोऽनन्तानन्ताभिः कर्मवर्गणाभिरावेष्टितपरिवेष्टित इति ॥

२ यदि वाऽपि भिन्नदेशमपि वेदनां करोति कर्म एतत् ते। कथमन्यशरीरगतं न वेदनां करोत्यन्यस्य? ॥१॥

उक्तं च-"[1]पत्तियमेत्ती सत्तित्ति णातियारो ण यावि पच्छित्तं । ण य सव्वव्वय-
संयतत्वापत्तिः, शक्त्यपेक्षत्वात्तद्धेतुप्रत्याख्यानस्य, उक्तं च-"[1]पत्तियमेत्ती सत्तित्ति णातियारो ण यावि पच्छित्तं । न तावद् व्यञ्जनं स्वप्नादावपि
नियमो पगेण य संजयत्तन्ति ॥ १ ॥" अथानागताद्धा तत्रापि किं भावः प्रत्याख्यानं व्यञ्जनं वा ?, न तावद् व्यञ्जनं स्वप्नादावपि तत्र च
तदुच्चारणे प्रत्याख्यानप्रसङ्गात् प्रमादतः शक्तिवैकल्यतो वा व्यञ्जनस्खलने तदभावापत्तेश्च, ततः प्रथमपक्ष एवावशिष्यते, तत्र च
सदा सावद्यमहं न सेविष्ये इति तस्य भाव उत कदाचिदिति ?, यदि आद्यपक्षस्तदा मृतस्यापि तत्सेवायामपरिपूर्णप्रतिज्ञत्वेन
व्रतभङ्गप्रसङ्गः, तथा सिद्धानामपि संयतत्वापत्तिः, सकलानागताद्धाप्रत्याख्यानधारित्वात् । एवं च [2]"सिद्धे नो चारित्ती' नो अचा-
रित्ती' इत्यागमविरोधः, अथ द्वितीयपक्षस्तत्र किं यथा भावस्तथा व्यञ्जनमथान्यथा ?, यदि यथा भावस्तथा व्यञ्जनम् एवं सति
विज्ञातविषयादेरेव प्रत्याख्यानमन्यथा तद्भङ्गप्रसङ्गः, ततश्च जीवन्नहं सावद्यं न सेविष्ये मृतस्य तु कर्मोदयस्वाभाव्यादवश्यंभाविन्य-
विरतिरित्ययमेव तस्य भावः, तथा च यथाभावं व्यञ्जनोच्चारणे बलादापतितं यावज्जीवेति, तथा च जीवनावधित्वादपरिमाण-
त्वहानिः, अन्यथा व्यञ्जनोच्चारणमिति पक्षे च परिस्फुटैव मृषाभाषिता, ज्ञात्वा अन्यथाभिधानात्, उक्तं च-[3]"जो पुण अव्वयभावं
मुणमाणोऽवस्सभाविणं भणति । वयमपरिमाणमेवं पच्चक्खं सो मुसावाई ॥ १ ॥" ततश्च-'नाशंसातो यतस्तस्य,' यावज्जीवेति
पठ्यते । किन्तु भङ्गभयादेव, तस्मादस्तु यथास्थितम् ॥ १ ॥ प्रयोगश्च-यत्र नाशंसा न तत्सावधित्वेऽपि साभिष्वङ्गं, तथा कायो-
त्सर्गो, न विद्यते च यतिप्रत्याख्याने यावज्जीवेति पदेऽप्याशंसेति, इत्यादि [4]जहा आयरिएहिं भणियं तहा सव्वे भणंति, जहा

१ एतावन्मात्रा शक्तिरिति नातीचारो न चापि प्रायश्चित्तम् । न च सर्वगतनियम एकेनापि संगततमिति ॥ १ ॥ २ सिद्धा नो चारित्रिणो नो
अचारित्रिणः । ३ यः पुनरव्रतभावं मुणन् अवश्यभाविनं भणति । व्रतमपरिमाणमेवं प्रत्यक्षं स मृषावादी ॥ १ ॥ २ यथा आचार्यैर्भणितं तथा सर्वे भणन्ति,
यथैतावद्भणितमाचार्यैः, येऽपि अन्ये स्थविरा बहुश्रुता अन्यगच्छीयास्तेऽपि पृष्टाः, एतावदेव भणन्ति, तदा भणति-यूयं किं जानीथ ?, तीर्थकरैरेतावत् भणितं,
तैर्भणितं-त्वं न जानीषे, यदा न तिष्ठति तदा संघसमवाय कृता देवतायै कायोत्सर्गः कृतः, या आद्या सा

कीरति ?, जो सो आससादोसो सो णियत्तितो भवति, जावजीवाए पुण भणतेण परिमाणेण अब्भुवगय भवति, जहाऽहं इणि स्सामि पाणाई, एतन्निमित्त अपरिमाणाए कायव्व ॥ स चय यदविन्ध्येनाभिदधे यथाऽय भवदाशय—सावधि स्यादभिष्वङ्गि, गृहिणामित्वर यथा । प्रत्याख्यान तथा चेद यावज्जीव यतेरपि ॥ १ ॥ प्रयोग यत्परिमाणवत् प्रत्याख्यान तत्साभिष्वङ्ग यथा गृहिणामित्वरप्रत्याख्यान परिमाणवच्च यतेरपि यावज्जीवं सर्वसावद्यप्रत्याख्यानमित्ययमनैकान्तिको हेतु, तथाहि—किमत्र परिमाण यत्वमात्रेण साभिष्वङ्गता साध्यते उत आशसयाऽपि ?, प्रथमपक्षे किं यतेरद्धाप्रत्याख्यानमस्ति न वा ?, यद्यस्ति किं पौरुष्यादि पदोपेतमितरथा वा ? यदि पौरुष्यादिपदोपेत किं न परिणामवत्त्वेन साभिष्वङ्गता ?, अथ न समतास्थितत्वात् तर्हि परिमाणत्व मनैकान्तिकम्, अथान भमतमेव तत्र पौरुष्यादिपदोपादानम्, एव सति प्रव्रज्यादिन एवानशनापत्ति, तथा च-[1]"णिप्फादिया य सीसा दीहो परियालितो य परियातो' इत्याद्यागमविरोध, न चाद्धाप्रत्याख्यानं नास्त्येव यतेरिति पक्ष, [2]'अणागतमइक्कत' इत्यागमेन तस्याभिधानात्, द्वितीयपक्ष तु नैवमस्याशसा—यथा भवान्तरे सावद्यमह सेविष्ये, येन साभिष्वङ्गता स्यात्, यदपि यावज्जीवेति पदोच्चारण तदपि व्रतभङ्गभयादेव, तदुक्तम्—[3]"वयभगभयाउ च्चिय जावजीवत्ति णिद्दिट्ठ' किञ्च-परिणामवत्त्वेन साभि ष्वङ्गतां साधयतस्तवाकृतमपरिमाण प्रत्याख्यानमिति, तत्र च नञा परिमाणाभावमात्रमुच्यते वस्त्वन्तरविधिर्वा ?, यदि परिमाणा भावमात्र तदा तस्याभिष्वङ्गहेतुत्वेनैव निषेध, तद्धेतुत्व च तस्यानैकान्तिकमनन्तरमेवोक्तमिति किं तन्निषेधेन ?, अथ वस्त्वन्तर विधिस्तत्र वस्त्वन्तर शक्तिरनागताद्धा वा ?, यदि शक्तिस्तत्र किं यावच्छक्तिस्तावन्मम प्रत्याख्यानम् अथ यावति विषये शक्ति स्तावतीति ?, प्रथमपक्षे शकनक्रियापरिमाणपरिमितत्वात् प्रत्याख्यानस्य परिमाणवत्त्वमेवोक्त भवतीति स्ववचनविरोध, प्रत्याख्या नानवस्था चैव, शक्तेरनियतत्वात्, तथा चातीचारासत्त्वं, तदसत्त्वे च प्रायश्चिताभाव, द्वितीयपक्षे तु प्राणवधाद्यन्तरविरतावपि

१ निष्पादिताश्च शिष्या दीर्घ परिपालितश्च पर्याय । २ अनागतमतिक्रान्त । ३ व्रतभङ्गभयादेव यावज्जीवमिति निर्दिष्टम् ॥

[ य ॥ १७८ ॥

रहवीरपुरं नयरं दीवगमुज्जाण अज्जकण्ह

व्याख्या—अक्षरार्थः सुगमः ॥ १७८ ॥ भावा॰ ... रपुरे समुप्पन्ना ॥ १ ॥ तेणं कालेणं तेणं समयेणं रहवीरपुरं कव्वडं, तत्थ दीवगं णाम उज्जाणं, तत्थ अज्जकण्हा आयरिया समोसढा। तत्थ एगो सिवभूई णाम साहस्सिमल्लो, सो रायाणं उवगतो, तुमं ओलग्गामित्ति, जा परिक्खामित्ति, रायाए अन्नया भणितो वच्च माइघरे सुसाणे किण्हचउद्दसीए बलिं देहि, सुरा पसुतो दिन्नो, अन्ने य पुरिसा भणिया-एयं बीहाविज्जाह, [2]सो गंतूण माइबलिं दाऊण छुहिओमित्ति तत्थेव सुसाणे तं पसुं पओलित्ता खाइ, ते य गोहा सिवारसिएहिं समंता भेरवं रवं करेंति, तस्स रोमुब्भेओऽवि न कज्जइ, तओ

[1] छव्वाससएहिं णवोत्तरेहिं सिद्धिं गयस्स वी...

१ षट्सु वर्षशतेषु नवोत्तरेषु सिद्धिं गतात् वीरात्। तदा बोटिकानां दृष्टी रथवीरपुरे समुत्पन्ना ॥ १ ॥ तस्मिन् काले तस्मिन् समये रथवीरपुरं कर्बटं, तत्र दीपकं नामोद्यानं, तत्र आर्यकृष्णा आचार्याः समवसृताः। तत्रैकः शिवभूतिनामा सहस्रमल्लः, स राजानमुपगतः, त्वामवलगामीति, यावत्परीक्ष इति, राज्ञाऽन्यदा भणितः-व्रज मातृगृहे श्मशाने कृष्णचतुर्दश्यां बलिं देहि, सुरा पशुश्च दत्तौ, अन्ये च पुरुषा भणिताः-एनं भापयध्वं, । २ स गत्वा मातृबलिं दत्त्वा बुभुक्षितोऽस्मीति तत्रैव श्मशाने तं पशुं पक्त्वा खादति, ते च पुरुषाः शिवारसितैः समन्ताद्भैरवं रवं कुर्वन्ति, तस्य रोमोद्भेदोऽपि न क्रियते, तदाऽभ्यागतो गतः, तैः शिष्टं, वृत्तिर्दत्ता। अन्यदा स राजा दण्डिकान् आज्ञापयति—यथा मथुरां गृह्णीत, ते सर्वबलेनोद्धाविताः, ततोऽदूरसामन्ते गत्वा भणन्ति—अस्माभिर्न पृष्टं—कतरां मथुरां व्रजामः, राजा चाविज्ञप्यः, ते कान्दिशीकास्तिष्ठन्ति, शिवभूतिरागतो भणति- किं भोस्तिष्ठत ?, तैः शिष्टं, ततो भणति—द्वे अपि गृह्णीमः समकमेव, ते भणन्ति—न शक्ये, द्विविभागिकैः एकैकस्याः (ग्रहणे) बहुः कालो भवतीति, स भणति—या दुर्जया तां मह्यं दत्त, भणितो गाजियाति, भणति—एवं भणित्वा

पत्तियं भणिय आयरिएहिं, जेऽवि अन्ने थेरा बहुस्सुया अन्नगच्छेल्ला तेऽवि पुच्छिया, एत्तियं चेव भणंति, ताहे भणति-तुब्भे किं जाणह?, तित्थयरेहिं एत्तियं भणियं, तेहिं भणियं—तुमं न जाणसि, आहे ण ठाइ ताहे संघसमवातो कतो, देवयाए काउस्सग्गो कतो, जा सड्डिया सा 'आगया, भणइ संदिसहत्ति ताहे भणिया-वच्च तित्थयरं पुच्छ, किं?, जं गोट्ठामाहिलो भणइ तं सच्चं?, दुब्बलियापूसमुहो संघो जं भणइ तं सच्चं?, ताहे सा भणति-मम अणुबलं देह, काउस्सग्गो दिण्णो, ताहे सा गया, तित्थयरो पुच्छितो, तेहिं वागरियं—जहा संघो सम्मावाई, इयरो मिच्छावादी, निण्हवो एस सत्तमो, ताहे आगया, भणिओ—ओस्सारेह, संघो सम्मावादी, एस मिच्छावादी निण्हवो, ताहे सो भणति—एसा अप्पिड्डिया वराई, का एयाए सत्ती गंतूण?, तीसेऽवि ण सद्दहति, ताहे पूसमित्ता भणति-जहा अज्जो! पडिवज्जउ, मा उग्घाडिज्जिहिसि, णेच्छति, ताहे सो संघेण वज्झोकतो बारसविहेणं संभोएणं, तंजहा-'उवहि १ सुय २ भत्तपाणे ३ अंजलीपग्गहे त्ति य ४। दायणा य ५ णिकाए य ६ अब्भुट्ठाणेत्ति आवरे ७ ॥१॥ ॥ १ ॥ किइकम्मस्स य करणे ८ 'वेयावच्चकरणे इय ९। समोसरणसंनिसेज्जा १० कहाए य ११ निमंतणा १२ ॥ २ ॥' एस बारसविहो, सत्तरभेदो जहा पच्चकप्पे ॥ इत्युक्ता अल्पतरविसंवादिनो निह्नवा, प्रसक्त एव बहुतरविसंवादिनं बोटिकमाह—

१ आगता, भणति-संदिशतेति, तदा भणिता—गच्छ तीर्थकरं पृच्छ, किम्?, यद्गोष्ठमाहिलो भणति तत्सत्यम्? दुर्बलिकाप्रमुख संघो यद्भणति तत्सत्यम्?, तदा सा भणति—ममानुबलं दत्त, कायोत्सर्गो दत्त तदा सा गता, तीर्थंकरं पृष्ट, तैर्व्याकृत-यथा संघ सम्यग्वादी, इतरो मिथ्यावादी, निह्नव एष सप्तम, तत आगता, भणित—उत्सारयत, संघ सम्यग्वादी, एष मिथ्यावादी निह्नवः, तदा स भणति-एषाऽल्पर्द्धिका वराकी, कैतस्या शक्तिर्गन्तुं?, तस्या अपि न श्रद्दधाति, तदा पुष्यमित्रा भणन्ति-यथा आर्य! प[illegible] म्, संघेन बाह्य कृतो द्वादशविधात् संभोगात्, तद्यथा—उपधि श्रुतं भक्तपाने अञ्जलिग्रह इति च। दानं च [illegible] । २ वैयावृत्यकरण इति। समवसरणसंनिषद्या कथा च निमन्त्रणा ॥ २ ॥ एष द्वादशविध [illegible]

रहवीरपुरं नयरं दीवगमुज्जाण अज्जकण्हे अ । सिवभूइस्सुवहिंमि पुच्छा थेराण कहणा य ॥ १७८ ॥

व्याख्या—अक्षरार्थः सुगमः ॥ १७८ ॥ भावार्थस्तु सम्प्रदायादवसेयः, स चायम्—

[1] छव्वाससएहिं णवोत्तरेहिं सिद्धिं गयस्स वीरस्स । तो बोडियाण दिट्ठी रहवीरपुरे समुप्पन्ना ॥ १ ॥ तेणं कालेणं तेणं समयेणं रहवीरपुरं कब्बडं, तत्थ दीवगं णाम उज्जाणं, तत्थ अज्जकण्हा आयरिया समोसढा । तत्थ एगो सिवभूई णाम साहस्सिमल्लो, सो रायाणं उवगतो, तुमं ओलग्गामित्ति, जा परिक्खामित्ति, रायाए अन्नया भणितो वच्च माइघरे सुसाणे किण्हचउद्दसीए बलिं देहि, सुरा पसुतो दिन्नो, अन्ने य पुरिसा भणिया—एयं बीहाविज्जाह, [2] सो गंतूण माइबलिं दाऊण छुहिओमित्ति तत्थेव सुसाणे तं पसुं पओलित्ता खाइ, ते य गोहा सिवारसिएहिं समंता भेरवं रवं करेंति, तस्स रोमुग्गमोऽवि न कज्जइ, तआ

॥ १ ॥ तस्मिन् काले तस्मिन् समये रथवीरपुरं कर्बटं,

१ षट्सु वर्षशतेषु नवोत्तरेषु सिद्धिं गतात् वीरात् । तदा बोटिकानां दृष्टी रथवीरपुरे समुत्पन्ना ॥ १ ॥ तस्मिन् काले तस्मिन् समये रथवीरपुरं कर्बटं, तत्र दीपकं नामोद्यानं, तत्र आर्यकृष्णा आचार्याः समवसृताः । तत्रैकः शिवभूतिनामा सहस्रमल्लः, स राजानमुपगतः, त्वामवलगामीति, यावत्परीक्ष इति, राज्ञाऽन्यदा भणितः—व्रज मातृगृहे श्मशाने कृष्णचतुर्दश्यां बलिं देहि, सुरा पशुश्च दत्तौ, अन्ये च पुरुषा भणिताः—एनं भापयध्वं, । २ स गत्वा मातृबलिं दत्त्वा बुभुक्षितोऽस्मीति तत्रैव श्मशाने तं पशुं पक्त्वा खादति, ते च पुरुषाः शिवारसितैः समन्ताद्भैरवं रवं कुर्वन्ति, तस्य रोमोद्भेदोऽपि न क्रियते, तदाऽभ्युत्थितो गतः, तैः शिष्टं, वृत्तिर्दत्ता । अन्यदा स राजा दण्डिकान् आज्ञापयति—यथा मथुरां गृह्णीत, ते सर्वबलेनोद्धाविताः, ततोऽदूरगामिनो गत्वा भणन्ति—अस्माभिर्न पृष्टं—कतरां मथुरां व्रजामः, राजा चाविज्ञप्यः, ते कान्दिशीकास्तिष्ठन्ति, शिवभूतिरागतो भणति- किं भोस्तिष्ठत ?, तैः शिष्टं, ततो भणति—द्वे अपि गृह्णीमः समकमेव, ते भणन्ति—न शक्ये, दुर्विभागिकैः एकैकस्याः (ग्रहणे) बहुः कालो भवतीति, स भणति—या दुर्जेया तां मह्यं दत्त, भणितो यावन्नियातीति, भणति—एवं भणित्वा

अब्भुट्ठिओ गतो, तेहिं सिट्ठ, वित्ती दिन्ना। अन्नया सो राया दंडे आणवेति-जहा महुरं गेण्हह, ते सव्वयत्तेण उद्धाईया, ततो अदूरसामंतेण गतूण भणति-अम्हे ण पुच्छिय-कयरं महुरं वच्चामो, राया य अविण्णवणिज्जो, ते गुगुयता अच्छति, सिवभूई आगतो भणति-किं भो! अच्छह?, तेहिं सिट्ठ, तो भणति-दोऽवि गिण्हामो सम चेव, ते भणति-ण सक्का, दो भागेपहिं एक्के क्काए बहु कालो होतित्ति, सो भणति ज दुज्जयं तं मम देह, भणितो जा णिज्जाइ, भणई-सूरे त्यागिनि विदुषि च वसति जन स च जनाद्गुणी भवति। गुणवति धन धनाच्छ्री श्रीमत्याज्ञा ततो राज्यम्॥ १॥ एवं भणित्ता [1]पहावितो पडुमहुरंतेण, तत्थ पच्चंताणि ताविउमारद्धो, दुग्गे ठितो, एव ताव जाव णगरसेस जाय, पच्छा णगरमवि गहिय ओवइत्ता, ततो णिवेइयं तेण रण्णो, तुट्ठेण भणिय-किं देमि?, सो चिंतिय भणति-ज मए गहिय तं सुगहियं, जहिच्छतो भविस्सामि, एवं होउत्ति। एव सो य राहिं चेय हिंडतो अड्ढरत्ते आगच्छति वा ण वा, तस्स भज्जा ताव ण जेमेइ सुयति वा जाव णागतो भवति, सावि णिव्विण्णा। अन्नया मायरं सा वढेति-तुम्ह पुत्तो दिवसे २ अड्ढरत्ते एति, अह जग्गामि, छुहातिया अच्छामि, ताहे ताए भणइ-मा दारं देज्जाहि, अह अज्ज जग्गामि, सो दारं मग्गति, इयरीय अंबाडितो, भणितो य जत्थ इमाए वेलाए उग्घाडियाणि तत्थ वच्च, तस्स भविय

[1] प्रधावित पाण्डुमथुराध्वना तत्र प्रत्यन्तास्तापयितुमारब्ध दुर्गे स्थित, एवं तावद्यावत् नगरशेष जातं, पश्चान्नगरमपि गृहीतमवतीर्य ततो निवदितं तेन राज्ञे तुष्टेन भणितं—किं ददामि? स चिन्तितं (चिन्तयित्वा) भणति—य मया गृहीत त सुगृहीतं याद्दच्छिको भविष्यामि, एवं भवत्विति। एवं स च बहिरेव हिण्डमानोऽर्धरात्र आगच्छति वा न वा तस्य भार्या तावन्न जमति स्वपिति वा यावन्नागतो भवति साऽपि निर्विण्णा। अन्यदा मातरं सा कलहयति—युष्माकं पुत्रो दिवसे दिवसे अर्धरात्रे आयाति अहं जागर्मि क्षुधार्त्ता तिष्ठामि तदा तया भण्यते—मा द्वारं दा, अहमद्य जागर्मि, स द्वारं मार्गयति इतरया निर्भर्त्सित भणितश्च यत्रास्यां वेलायामुद्घाटितानि (द्वाराणि) तत्र व्रज तस्य भवितव्यतया तेन मार्गयता उद्घाटित साधुप्रतिश्रयो दृष्ट तत्र गतो वन्दते भणति—प्रव्राजयत मा,

व्वयाए तेण मग्गंतेण उग्घाडितो साहुपडिस्सतो दिट्ठो, तत्थ गतो, वंदति, भणइ-पव्वावेह मए [1]नेच्छंति, सयं लोओ कतो, ताहे से लिंगं दिन्नं, ते विहरिया। पुणोऽवि आगयाणं रण्णा कंबलरयणं से दिन्नं, आयरिएण-किं एएण जईणं?, किं गहियंति भणिऊण तस्स अणापुच्छाए फालियं, णिसेज्जातो कयातो, ततो स कसा इतो। अण्णया जिणकप्पिया वण्णिज्जंति जहा—जिणकप्पिया यदुविहा पाणीपाया पडिग्गहधरा य। पाउरणमपाउरणा एक्केक्का ते भवे दुविहा ॥ १ ॥ इत्यादि, सो भणइ—किं एस एवं ण कीरइ?, तेहिं भणियं—एस वोच्छिन्नो, ममं ण वोच्छिज्जइत्ति सो चेव परलोगत्थिणा कायव्वो ॥ तत्रापि सर्वथा निष्परिग्रहत्वमेव श्रेयः, सूरिभिरुक्तम्—धर्मोपकरणमेवैतत्, न तु परिग्रहस्तथा ॥ जन्तवो बहवस्सन्ति, दुर्दर्शा मांसचक्षुषाम्। तेभ्यः स्मृतं दयार्थं तु रजोहरणधारणम् ॥ १ ॥ आसने शयने स्थाने, निक्षेपे ग्रहणे तथा। गात्रसङ्कुचने चेष्टं, तेन पूर्वं प्रमार्जनम् ॥२॥ तथा—सन्ति सम्पातिमाः सत्त्वाः, सूक्ष्माश्च व्यापिनोऽपरे। तेषां रक्षानिमित्तं च, विज्ञेया मुखवस्त्रिका ॥ ३ ॥ किंच—भवन्ति जन्तवो यस्मादन्नपानेषु केषुचित्। तस्मात्तेषां परीक्षार्थं, पात्रग्रहणमिष्यते ॥ ४ ॥ अपरं च—सम्यक्त्वज्ञानशीलानि, तपश्चेतीह सिद्धये। तेषामुपग्रहार्थाय स्मृतं चीवरधारणम् ॥ ५ ॥ शीतवातातपैर्दंशैर्मशकैश्चापि खेदितः। मा सम्यक्त्वादिषु ध्यानं, न सम्यक् संविधास्यति ॥ ६ ॥ तस्य त्वग्रहणे यत् स्यात्, क्षुद्रप्राणिविनाशनम्। ज्ञानध्यानोपघातो वा, महान् दोषस्तदैव तु ॥ ७ ॥ यः पुनरतिसहिष्णुतयैतदन्तरेणापि न धर्मबाधकस्तस्य नैतदस्ति, तथा चाह—"य एतान् वर्जयेद्दोषान्, धर्मोपकरणादृते। तस्य त्वग्रहणं

---

[1] नेच्छन्ति, स्वयं लोचः कृतः, तदा तस्मै लिङ्गं दत्तं, ते विहृताः। पुनरप्यागतेषु राज्ञा कम्बलरत्नं तस्मै दत्तं, आचार्येण-किमेतेन यतीनां?, किं गृहीतमिति भणित्वा तमनापृच्छ्य स्फाटितं, निषद्याः कृताः, ततः स कषायितः। अन्यदा जिनकल्पिका वर्ण्यन्ते, यथा-जिनकल्पिकाश्च द्विविधाः पात्रपाणयः प्रतिग्रहधराश्च। सप्रावरणा अप्रावरणा एकैकास्ते भवेयुर्द्विविधाः ॥ १ ॥ स भणति-किमेष एवं न क्रियते?, तैर्भणितम्-एष व्युच्छिन्नः, मम न व्युच्छिद्यते इति स एव परलोकार्थिना कर्त्तव्यः।

युक, यः स्वाख्रिन इव प्रभु ॥ १ । स च प्रथमसहनन एव न चेदानीं तदस्तीयादिकया प्रागुक्तया च युक्त्योच्यमानोऽसौ 'कम्मोदयेण चीयराइयं छड्डेत्ता गतो तस्स उत्तरा भइणी उज्जाणे ठियस्स वंदिया गया त च दट्ठूण तीएवि चीयरातिय सव्वं छडिय, ताहे भिक्खाए पविट्ठा गणियाए दिट्ठा मा अम्ह लोगो विरज्जिहित्ति उरे से पोत्ती बद्धा सा णेच्छति, तेण भणिय-अच्छउ एसा तव देवयादिन्ना तेण य दो सीसा पव्वाविया-कोडिण्णो कोट्टवीरो य, तओ सीसाण परंपरफासो जातो ॥ एत दर्थोपसंहारिके भाष्यगाथे—

ऊहाए पन्नत्त बोडियसिवभूइउत्तराहि इम। मिच्छादसणमिणमो रहवीरपुरे समुप्पन्न ॥ १ ॥
बोडियसिवभूईओ बोडियलिंगस्स होइ उप्पत्ती। कोडिण्णकोट्टवीरा परंपराफासमुप्पन्ना ॥ २ ॥

व्याख्या— ऊहया' स्ववितर्कात्मिकया प्रज्ञस प्ररूपित, बोटिकश्चासौ चारित्रविकलतया मुण्डमात्रत्वेन शिवभूतिश्च बोटिक शिवभूति स चोत्तरा च तद्भगिनी बोटिकशिवभूत्युत्तरे ताभ्याम् 'इदम् अनन्तरोक्त यथास्योत्पत्तिस्तदाह—मिथ्यादर्शनम् 'इणमो त्ति आर्षत्वादिद रथवीरपुरे समुत्पन्नम् ॥ बोटिकशिवभूतेर्बोटिकलिङ्गस्य भवत्युत्पत्ति पठ्यते च बोडियलिङ्गस्स आसि उप्पत्ती,' तत्र च कौण्डिन्यकोट्टवीरौ परम्परा अव्यवच्छिन्नशिष्यप्रशिष्यसंतानलक्षणा तस्याः स्पर्शो यत्र तत्परम्परास्पर्शं यथा भवत्येवमुत्पन्नौ, अनेन कौण्डिन्यकोट्टवीराभ्यां बोटिकसन्तानस्योत्पत्तिरुक्ता भवतीति गाथाद्वयार्थं ॥ १–२ ॥ इयता ग्रन्थेन श्रद्धा

१ कर्मोदयेन चीवरादिकं त्यक्त्वा गत तस्योत्तरा भगिनी उद्याने स्थितं वन्दिका गता तच दृष्ट्वा तयाऽपि चीवरादिकं सर्वं त्यक्त, तदा भिक्षायै प्रविष्टा गणिकया दृष्टा माऽस्माकं लोको विरङ्क्षीत् इति उरसि तस्या पोतिका बद्धा सा नेच्छति तेन भणितं तिष्ठतु एषा तव देवतादत्ता । तेन च द्वौ शिष्यौ प्रव्राजितौ कौण्डिन्य कोट्टवीरश्च तत शिष्याणां परम्परास्पर्शो जात ॥

तस्याप्यनेनैव दुर्लभत्वमुक्तमेवेति भावनीयं। तथा
दुर्लभत्वमुक्तम्, अस्याश्च सम्यक्त्वरूपत्वात् सम्यक्त्वपूर्वकत्वाच्च संयमस्य तस्याप्यनेनैव दुर्लभत्वमुक्तमेवेति भावनीयं। तथा चत्वारीत्यङ्गमित्यस्य च व्याख्याने चतुरङ्गेभ्यो हितं तत्स्वरूपव्यावर्णनेन चतुरङ्गीयमिति व्युत्पत्तिः सुज्ञानैवेति निर्युक्तिकृता नोपदर्शिता। गतो नामनिष्पन्ननिक्षेपः, सम्प्रति सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्च—

**चत्तारि परमंगाणि, दुल्लहाणिह जंतुणो। माणुसत्तं सुई सद्धा, संजमंमि य वीरियं ॥ १ ॥ (सूत्रम्)**

व्याख्या—'चत्वारि' चतुःसङ्ख्यानि परमाणि च तानि प्रत्यासन्नोपकारित्वेन अङ्गानि च मुक्तिकारणत्वेन परमाङ्गानि 'दुर्लभानि' दुःखेन लभ्यन्त इतिकृत्वा दुष्प्रापाणि 'इह' अस्मिन्संसारे, कस्य ?-जायत इति जन्तुस्तस्य देहिन इत्यर्थः, पठ्यते च-'देहिन' इति, कानि पुनस्तानि ?-मनसि शेते मानुषः, अथवा मनोरपत्यमिति वाक्ये "मनोर्जातावञ्यतौ षुक् च" (पा० ४-१-१६१) इत्यञि प्रत्यये षुगागमे च मानुषस्तद्भावः मानुषत्वं-मनुजभावः, 'श्रवणं' श्रुतिः, सा च 'अर्थप्रकरणादिभ्यः सामान्यशब्दा अपि विशेषेऽवतिष्ठन्ते' इति न्यायाद्धर्मविषया, श्रद्धाऽपि तत एव धर्मविषया, 'संयमे' आश्रवविरमणात्मनि, चः समुच्चये भिन्नक्रमः, ततो विशेषेणेरयति-प्रवर्त्तयति आत्मानं तासु तासु क्रियास्विति वीर्यं च-सामर्थ्यविशेष इति सूत्रार्थः ॥ १ ॥ तत्र यथा मानुषत्वं दुर्लभं तथा दर्शयितुमाह—

**समावण्णाण संसारे, णाणागोत्तासु जाइसु। कम्मा णाणाविहा कट्टु, पुढो विस्संभिया पया ॥२॥ (सूत्रम्)**

व्याख्या—'सम्' इति समन्तात् आपन्नाः-प्राप्ताः समापन्ना णं इति वाक्यालङ्कारे क्वेत्याह—संसारे, तत्रापि क्व ?-नाना इत्यनेकार्थः, गोत्रशब्दश्च नामपर्यायः, ततो नानागोत्रासु-अनेकाभिधानासु जायन्ते जन्तव आस्विति जातयः-क्षत्रियाद्याः तासु, अथवा जननानि जातयः ततो जातिषु-क्षत्रियादिजन्मसु नाना-हीनमध्यमोत्तमभेदेनानेकं गोत्रं यासु तास्तथा तासु, अत्र हेतु-

माह—क्रियन्त इति कर्माणि-ज्ञानावरणीयादीनि 'नानाविधानि' अनेक प्रकाराणि 'कृत्वा' निर्वर्त्य 'पुढो त्ति' पृथग् भेदेन, किमुक्त भवति ?-एकैकश, विस्सभिय त्ति विन्दोरलक्षणिकत्वाद् विश्व-जगद् बिभ्रति-पूरयन्ति क्वचित्कदाचिदुत्पत्त्या सर्वजगद्व्यापनेन विश्वभृत, उक्त च-"णत्थि किर सो पएसो लोए वालग्गकोडिमित्तोऽपि । जम्मणमरणाबाहा जत्थ जिएहि न संपत्ता ॥१॥" इद मुक्तं भवति-यथाप्यपि मानुषत्वं स्वकृतविचित्रकर्मानुभावत पृथग्जातिभागिन्य एव भवन्ति, का—'प्रजा.' जनसमूहरूपा, तद नेन प्राप्तमानुषत्वानामपि कर्मवशाद्विविधगतिगमन मनुजत्वदुर्लभत्वे हेतुरुक्त, यद्वा संसारे कर्माणि नानाविधानि कृत्वा पृथगिति भिन्नासु नानागोत्रासु अनेककुलकोट्युपलक्षितासु जातिषु-देवाद्युत्पत्तिरूपासु समापन्ना—सम्प्राप्ता वर्तन्त इति गम्यते, येति प्राग्वत्, 'विश्वम्भिता' सञ्जातविश्वम्भा सत्य एकमात्कर्मस्थैव तद्विपाकदारुणत्वापरिज्ञानात् का ?-प्रजायन्ते इति प्रजा—प्राणिन इति सम्बन्ध, तदनेन प्राणिनां विविधदेवादिभवभवन मूलत एव मनुजत्वदुर्लभत्वे कारणमुक्तमिति सूत्रार्थः ॥ २ ॥ अमु मेवार्थं भावयितुमाह—

एगया देवलोएसु, नरएसुऽवि एगया । एगया आसुरे कायें, आहाकम्मेहिं गच्छइ ॥ ३ ॥ (सूत्रम्)

व्याख्या—'एकदा' इत्येकस्मिन् शुभकर्मानुभवकाले दीव्यन्तीति देवा तेषां लोका—उत्पत्तिस्थानानि देवगत्यादिपुण्यप्रकृत्यु दयविषयतया लोक्यन्त इतिकृत्वा तेषु देवलोकेषु, नरान् कायन्ति-योग्यतयाऽऽह्वयन्तीति नरका तेषु रत्नप्रभादिषु नारकोत्पत्ति स्थानेषु, अपिशब्दस्य चार्थत्वात्तेषु च, 'एकदा' अशुभानुभवकाले, तथा 'एकदा' तथाविधभावनाभावितान्तःकरणावसरे, असुराणा मयमासुरस्तम्-असुरसम्बन्धिनं, चीयत इति कायस्त, निकायमित्यर्थ, बालतपःप्रभृतिभिरपि तत्प्राप्तिरिति दर्शनार्थं देवलोको

१ नास्ति किल स प्रदेशो लोके बालाग्रकोटीमात्रोऽपि । जन्ममरणाबाधा यत्र जीवैर्न संप्राप्ता ॥ १ ॥

पादानेऽपि पुनरासुरकायग्रहणम्, अथवा देवलोकशब्दस्य सौधर्मादिषु रूढत्वात्तदुपादानमुपरितनदेवोपलक्षणम्, इदं चाधस्तन-
देवोपलक्षणमिति न पौनरुक्त्यम्, 'आहाकम्मेहिं'ति आधानम्-आधाकरणमित्यर्थः, तदुपलक्षितानि कर्माण्याधाकर्माणि तैः, किमुक्तं
भवति ?-स्वयंविहितैरेव सरागसंयममहारम्भासुरभावनादिभिर्देवनारकासुरगतिहेतुभिः क्रियाविशेषैः यथाकर्मभिर्वा-तत्तद्गत्यनुरूप-
चेष्टितैः 'गच्छति' याति, इति सूत्रार्थः ॥ ३ ॥ तथा—

**एगया खत्तिओ होई, तओ चंडालवुक्कसो । तओ कीडपयंगो य, तओ कुंथू पिवीलिया ॥ ४ ॥ (सूत्रम्)**

व्याख्या—'एकदे'ति मनुष्यजन्मानुरूपकर्मप्रकृत्युदयकाले 'खत्तिय'त्ति 'क्षण हिंसायां' क्षणनानि क्षतानि तेभ्यस्त्रायत इति
क्षत्रियो-राजा भवति, 'तत' इति तदनन्तरं तको वा प्राणी 'चण्डालः' प्रतीतः, यदि वा शूद्रेण ब्राह्मण्यां जातश्चण्डालः,' वोक्कसो'
वर्णान्तरभेदः, तथा च वृद्धाः-[1]"बंभणेण सुद्दीओ जातो णिसाउत्ति वुच्चति, बंभणेण वेसीए जातो अंबट्ठोत्ति वुच्चति, तत्थ णिसा-
एणं जो अंबट्ठीते जातो सो वुक्कसो भण्णति" इह च क्षत्रियग्रहणादुत्तमजातयः चण्डालग्रहणान्नीचजातयो वुक्कसग्रहणाच्च सङ्कीर्ण-
जातय उपलक्षिताः, 'ततो' मानुषत्वादुद्धृत्येति शेषः, 'कीटः' प्रतीतः 'पतङ्गः' शलभः, चः समुच्चये, ततस्तको वा 'कुन्थू पिपी-
लिक'त्ति , चशब्दस्य लुप्तनिर्दिष्टत्वात् कुन्थुः पिपीलिका च, भवतीति सर्वत्र सम्बध्यते, शेषतिर्यग्भेदोपलक्षणं चैतदिति सूत्रार्थः
॥ ४ ॥ किमित्थं पर्यटन्तस्ते निर्विद्यन्ते न वेत्याह—

**एवमावट्टजोणीसुं, पाणिणो कम्मकिब्बिसा । ण णिविज्जंति संसारे, सव्वट्ठेसु व खत्तिया ॥ ५ ॥ (सूत्रम्)**

**कम्मसंगेहि संमूढा, दुक्खिया बहुवेयणा । अमाणुसासु जोणीसु, विणिहम्मंति पाणिणो ॥ ६ ॥ (सूत्रम्)**

1 ब्राह्मणेन शूद्रयां जातो निषाद इत्युच्यते, ब्राह्मणेन वैश्यायां जातोऽम्बष्ठ इति उच्यते, तत्र निषादेन योऽम्बष्ठ्यां जातः स बुक्कसो भण्यते,

व्याख्या—'एवम्' अमुनोक्तन्यायेन आवर्त्तनम् आवर्त्तः परिवर्त्त इति योऽर्थो युवन्ति-मिश्रीभवन्ति कार्मणशरीरिण औदारिकादिशरीरैरासु जन्तवो जुवन्ते सेव्यन्ते ता इति वा योनयः, आवर्त्तोपलक्षिता योनय आवर्त्तयोनयः तासु, 'प्राणिनः' जन्तवः, कर्मणा-उक्तरूपेण किल्बिषा अधमाः कर्मकिल्बिषाः, आहितत्वाद्वा पूर्वापरनिपातः, किल्बिषाणि क्लिष्टतया निरनुबन्ध्यशुभानुबन्धीनि कर्माणि येषां ते किल्बिषकर्माणः, 'न निर्विद्यन्ते' कदैतद्विमुक्तिरिति नोद्विजन्ते, क्व या आवर्त्तयोनयः? इत्याह—'संसारे' भवे, केष्विव के न निर्विद्यन्ते? इत्याह सर्वे च ते अर्थाश्च इत्यर्थाः-मनोज्ञशब्दादयो धनकनकादयो वा सर्वार्थास्तेष्विव 'क्षत्रियाः' राजानः, किमुक्तं भवति?—यथा मनोज्ञान् शब्दादीन् भुञ्जानानां तेषां तर्षोऽभिवर्धते, एवं तासु तासु योनिषु पुनः पुनरुत्पत्त्या सत्या कर्मफलीभावमनुभवतामपि भवाभिनन्दिना प्राणिनामिति, कथमन्यथा न तत्प्रतिघातार्थमुद्यच्छेयुरिति भावः। पाठान्तरं वा 'सव्वट्ठ इव खत्तिया' इत्यो भिप्रायः, तत्र सर्वैः शयनादिभिरर्थः-प्रयोजनमस्येति सर्वार्थः क्षत्रियः, स चार्थात्कृतराज्यः, ततो यथाऽसौ न निर्विद्यते, अर्थात्सर्वार्थान् प्रार्थयमानः, तथैतेऽपि प्राणिनः सुखान्यभिलषन्तोऽनिर्विद्यमानाश्च, कर्मभिः-ज्ञानावरणीयादिभिः सङ्गाः-सम्बन्धाः कर्मसङ्गास्ते, यद्वा कर्माणि-उक्तरूपाणि तत्तत्क्रियाविशेषात्मकानि वा, तथा सज्यन्तेऽमीषु जन्तव इति सङ्गाः-शब्दादयोऽभिष्वङ्गविषयाः, ततश्च कर्माणि च सङ्गाश्च कर्मसङ्गाः तैः सम् इति भृशं मूढाः-वैचित्त्यमुपागताः सम्मूढाः, 'दुःखिताः' असातात्मकं जातमेषामिति दुःखिताः, कदाचित्तन्मानसमेव स्यादत आह—'बहुवेदनाः'-बह्व्यो वेदनाः-शरीरव्यथा येषां ते तथा, मनुष्याणामिमा मानुष्याः न तथाऽमानुष्याः, तासु-नरकतिर्यगाभियोग्यादिदेवदुर्गतिसम्बन्धिनीषु 'योनिषु' अभिहितरूपासु 'विनिहन्यन्ते' विशेषेण निपात्यन्ते, अर्थात्कर्मभिः, कोऽर्थः?—न ततः उत्सारं लभन्ते 'प्राणिनः' जन्तवः, तदनेन सत्यप्यावर्त्ते निर्वेदाभावात् कर्मसङ्गसंमूढाः दुःखहेतुनरकादिगत्यनुसरणेन प्राणिनो मनुजत्वं न लभन्त इत्युक्तमिति सूत्रद्वयार्थः ॥ ५—६ ॥ कथं तर्हि तदवाप्तिः? इत्याह—

व्याख्या—...

कत्वाद्विशेषेण दुर्लभं, यतः वहवः नेक एव ...

चेति च शब्दस्यैवकारार्थत्वान्नैव 'ण'मिति वाक्यालङ्कारे, अथवा ...

तपद्यन्ते चारित्रमोहनीयकर्म्मोदयतः, सत्यकिश्रेणिकादिवन्न कर्तुमभ्युपगच्छन्तीति सूत्रार्थः ॥ १० ॥ सम्प्रति दुर्लभस्यास्य

तुरङ्गस्य फलमाह—

**माणुसत्तंमि आयाओ, जो धम्मं सोच सद्दहे । तवस्सी वीरियं लद्धुं, संवुडो निद्धुणे रयं ॥११॥ ( सूत्रम् )**

व्याख्या—'मानुपत्वे' मनुजत्वे 'आयातः' आगतः, किमुक्तं भवति ?–मानुपत्वं प्राप्तो, य इत्यनिर्दिष्टस्वरूपो य एव कश्चि-द्धर्मं श्रुत्वा 'सद्दहे'त्ति श्रद्धत्ते-रोचयते 'तपस्वी' निदानादिविरहितया प्रशस्यतपोऽन्वितः, कथं ?–'वीर्यं' संयमोद्योगं लब्ध्वा संवृतः' स्थगितसमस्ताश्रवः, स किमित्याह–'णिद्धुणे'त्ति निर्धुनोति–नितरामपनयति रज्यते अनेन स्वच्छस्फटिकवच्छुद्धस्वभावोऽप्या-माऽन्यथात्वमापाद्यत रजः-कर्म्म वध्यमानकं वद्धं च, तदपनयनाच्च मुक्तिं प्राप्नोतीति भावः, उभयत्र लिप्स्यमानसिद्धौ चे पा. ३-३-७ ) ति लट्, इह च श्रद्धानेन सम्यक्त्वमुक्तं, तेन च ज्ञानमाक्षिप्तं, प्रदीपप्रकाशयोरिव युगपदुत्पादात्तयोः, तथा च सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' ( तत्त्वा० अ. १-सू. १ ) इति न विरुध्यत इति सूत्रार्थः ॥ ११ ॥ इत्थमामुष्मिकं मुक्तिफल-मुक्तम्, इदानीमिहैव फलमाह—

**सोही उज्जुभूयस्स, धम्मो सुद्धस्स चिट्ठति । णिव्वाणं परमं जाइ, घयसित्तेव पावए ॥ १२ ॥ ( सूत्रम् )**

व्याख्या—'एवम्' अमुनोक्तन्यायेन आवर्त्तनम् आवर्त्तः-परिवर्त्त इति योऽर्थो, युवन्ति-मिश्रीभवन्ति कार्मणशरीरिण औदारिकादिशरीरैरासु जन्तवो जुवन्ते सेवन्ते ता इति वा योनयः, आवर्त्तोपलक्षिता योनयः आवर्त्तयोनयः तासु, 'प्राणिनः' जन्तवः, कर्म्मणा-उक्तरूपेण किल्बिषाः-अधमाः कर्मकिल्बिषाः, प्राकृतत्वाद्वा पूर्वापरनिपातः, किल्बिषाणि-क्लिष्टतया निकृष्टान्यशुभानुबन्धीनि कर्म्माणि येषां ते किल्बिषकर्म्माण', 'न निर्विद्यन्ते' कदैतद्विमुक्तिरिति नोद्विजन्ते, क्व या आवर्त्तयोनयः? इत्याह-'संसारे' भवे, केष्विव के न निर्विद्यन्ते? इत्याह-सर्वे च ते अर्थाश्च इत्यर्थाश्च-मनोज्ञशब्दादयो धनकनकादयो वा सर्वार्थास्तेष्विव 'क्षत्रियाः' राजान, किमुक्तं भवति?-यथा मनोज्ञान् शब्दादीन् भुञ्जानानां तेषां तर्षोऽभिवर्धते, एवं तासु तासु योनिषु पुनः पुनरुत्पत्त्यां सत्यां कलंकलीभावमनुभवतामपि भवाभिनन्दिना प्राणिनामिति, कथमन्यथा न तत्प्रतिघातार्थमुद्यच्छेयुरिति भावः। पाठान्तरं वा-'सव्वट्ठ इव खत्तिय'त्ति इवो भिन्नक्रमः, ततः सर्वैः शयनादिभिरर्थः-प्रयोजनमस्येति सर्वार्थः क्षत्रियः, स चार्थाद्भ्रष्टराज्यः तद्वत्, ततो यथाऽसौ न निर्विद्यते, अर्थात्सर्वार्थान् प्रार्थयमानः, तथैतेऽपि प्राणिनः सुखान्यभिलषन्तोऽनिर्विद्यमानाश्च, कर्मभि-ज्ञानावरणीयादिभिः सङ्गाः-सम्बन्धाः कर्मसङ्गास्तैः, यद्वा कर्माणि-उक्तरूपाणि तत्तत्क्रियाविशेषात्मकानि वा, तथा सज्यन्तेऽमीषु जन्तव इति सङ्गाः-शब्दादयोऽभिष्वङ्गविषयाः, ततश्च कर्माणि च सङ्गाश्च कर्मसङ्गाः तैः सम् इति भृशं मूढाः-वैचित्त्यमुपागताः सम्मूढाः, 'दुःखम्' असातात्मकं जातमेषामिति दुःखिताः, कदाचित्तन्मानसमेव स्यादत आह—'बहुवेदनाः'-बह्व्यो वेदनाः-शरीरव्यथा येषां ते तथा, मनुष्याणामिमा मानुष्या न तथाऽमानुष्याः, तासु-नरकतिर्यगाभियोग्यादिदेवदुर्गतिसम्बन्धिनीषु 'योनिषु' अभिहितरूपासु 'विनिहन्यन्ते' विशेषेण निपात्यन्ते, अर्थात्कर्मभिः, कोऽर्थः?—न तत उत्तारं लभन्ते 'प्राणिनः' जन्तवः, तदनेन सत्यप्यावर्त्ते निर्वेदाभावात् कर्मसंगसंमूढाः दुःखहेतुनरकादिगत्यनुत्तरणेन प्राणिनो मनुजत्वं न लभन्त इत्युक्तमिति सूत्रद्वयार्थः॥ ५—६॥ कथं तर्हि तदवाप्तिः? इत्याह—

**कम्माणं तु पहाणाए, आणुपुव्वी कयाइ उ । जीवा सोहिमणुप्पत्ता, आययंति मणुस्सयं ॥ ७ ॥ ( सूत्रम् )**

व्याख्या—'कर्मणां' मनुजगतिविबन्धकानाम् 'तुः' पूर्वस्माद्विशेषद्योतकः 'पहाणाए'त्ति प्रकृष्टं हानम्-अपगमः प्रहाणं तस्यायो—लाभः प्रहाणायः तस्मिन्, यद्वा सूत्रत्वात् प्रहाणो प्रहान्या वा तद्विबन्धकानन्तानुबन्ध्यादिकर्मसु प्रहीणेषु, कुतश्चिदीश्वरानुग्रहादेस्तदप्राप्तेः, अन्यथा हि तद्वैफल्यापत्तिः, एतेन-'अन्यो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्, श्वभ्रं स्वर्गमेव वा ॥ १ ॥' इत्यपास्तं भवति, अथ कथं पुनस्तेषां प्रहाणिरित्याह—'आनुपूर्व्या' क्रमेण न तु झगित्येव, तथापि 'कयाइ उ'त्ति तुशब्दस्यैवकारार्थत्वात्कदाचिदेव न सर्वदा, 'जीवाः' प्राणिनः 'शुद्धिम्' क्लिष्टकर्मविगमात्मिकाम् अनु-तद्धि घातिकर्मापगमस्य पश्चात्प्राप्ताः 'आददते' स्वीकुर्वन्ति मनुष्यतां, पाठान्तरतश्च 'जायन्ते मणुस्सयं (सत्तयं)'ति सुब्व्यत्ययान्मनुष्यतायां, तदेव तन्निर्वर्त्तकमनुजगत्यादिकर्मोदयादिति भावः, अनेन मनुजत्वविबन्धककर्मापगमस्य तथाविधकालादिसव्यपेक्षत्वेन दुरापतया मनुष्यत्वदुर्लभत्वमुक्तमिति सूत्रार्थः ॥ ७ ॥ कदाचिदेतदवाप्तौ श्रुतिः सुलभैव स्यादत आह—

**माणुस्सं विग्गहं लद्धुं, सुती धम्मस्स दुल्लहा । जं सोचा पडिवज्जंति, तवं खंतिमहिंसयं ॥ ८ ॥ ( सूत्रम् )**

व्याख्या—'माणुस्सं'ति सूत्रत्वान्मानुष्यकं मनुष्यसम्बन्धिनं विशेषेण गृह्यते आत्मना कर्म्मपरतन्त्रेणेति विग्रहस्तं मनुजगत्याद्युपलक्षितमौदारिकशरीरं 'लद्धुं'ति अपेर्गम्यमानत्वात् लब्ध्वापि, 'श्रुतिः' आकर्णनं, कस्य ?-धारयति दुर्गतौ निपततो जीवानिति धर्म्मः, तथा च वाचकः-"प्राग्लोकबिन्दुसारे सर्वाक्षरसन्निपातपरिपठितः । धृञ् धरणाऽर्थो धातुस्तदर्थयोगाद्भवति धर्म्मः ॥ १ ॥ दुर्गतिभयप्रपाते पतन्तमभयकरदुर्लभत्राणे । सम्यक् चरितो यस्माद्धारयति ततः स्मृतो धर्मः ॥ २ ॥" तस्य-एवमन्वर्थनाम्नो धर्मस्य 'दुर्लभा' दुरापा प्रागुक्तालस्यादिहेतुतः, स च—'मृद्वी शय्या प्रातरुत्थाय पेया, भक्तं मध्ये पानकं चापराह्णे । द्राक्षाखण्डं शर्करा

घार्यराश्वे, मोक्षध्याने शाक्यपुत्रेण दृष्ट' ॥ १ ॥ इत्यादिसुगतादिकल्पितोऽपि स्याद् अतस्तदपोहायाह-यं धर्मं श्रुत्वा 'प्रतिपद्यन्ते' अङ्गीकुर्वन्ति 'तपः' अनशनादि द्वादशविधम् 'क्षान्तिं' क्रोधजयलक्षणां मानादिजयोपलक्षणं चैषा, 'अहिंसयन्ति' अहिंस्रताम्-अहिंसनशीलताम्, अनेन च प्रथमव्रतमुक्तम्, एतच्च शेषव्रतोपलक्षणम्, एतत्प्रधानत्वात्तेषाम्, एतद्वृत्तितुल्यानि हि शेषव्रतानि, एवं च तपसः क्षान्त्यादिचतुष्कस्य महाव्रतपञ्चकस्य चाभिधानाद्दशविधस्यापि यतिधर्मस्याभिधानम्, इह च यद्यपि श्रुतेः शार्द्धं प्राधान्यं तथापि तत्त्वतो धर्म एव प्रधानं, तस्या अपि तदर्थत्वादिति, स एव यच्छब्देन परामृश्यते, अथवा काका नीयते-'यद्' यस्मात् श्रुत्वा प्रतिपद्यन्ते तपःप्रभृति नाश्रुत्वा "सुच्चा' जाणति कल्लाणं, सोच्चा जाणति पावगं' इत्याद्यागमात्, तत एवमतिमहार्थतया दुरापेयमिति सूत्रार्थः ॥ ८ ॥ श्रुत्यवाप्तावपि श्रद्धादुर्लभतामाह—

**आहच्च सवणं लद्धुं, सद्धा परमदुल्लहा । सोच्चा णेयाउयं मग्गं, बहवे परिभस्सइ ॥ ९ ॥ [सूत्रम्]**

व्याख्या—'आहच्च' इति कदाचित् 'श्रवणम्' प्रक्रमाद्धर्मकिर्णनम्, उपलक्षणत्वान्मनुष्यत्वं च लब्ध्वेति, अपि शब्दस्य गम्यमानत्वात् लब्ध्वापि-अवाप्यापि 'श्रद्धा' रुचिरूपा प्रक्रमाद्धर्मविषयैव 'परमदुर्लभा' अतिशयदुरापा, कुतः पुनः परमदुर्लभत्वमस्या इत्याह—'श्रुत्वा' आकर्ण्य न्यायेन चरति-प्रवर्त्तते नैयायिकः, न्यायोपपन्न इत्यर्थः, तं 'मार्गम्' सम्यग्दर्शनाद्यात्मकं मुक्तिपथं बहवः नैक एव, परि इति सर्वप्रकारं 'भस्सइ'त्ति भ्रश्यन्ति-च्यवन्ते प्रक्रमान्नैयायिकमार्गादेव, यथा जमालिप्रभृतयो, यच्च इति सूत्रार्थः ॥ ९ ॥ एतत्त्रयावाप्तावपि संयमवीर्यदुर्लभत्वमाह— इहैव केचिन्निह्नववक्तव्यतां व्याख्यातवन्त, उचितं चैतदप्यास्त (व्यस्ति)

श्रुत्वा जानाति कल्याणं श्रुत्वा जानाति पापकम्

सुइं च लद्धुं सद्धं च, वीरियं पुण दुलहं । वहवे रोयमाणाऽवि, णो य णं पडिवज्जइ ॥ १० ॥ (सूत्रम्)

व्याख्या—श्रुतिं चशब्दान्मनुष्यत्वं च 'लद्धुं'ति प्राग्वल्लब्ध्वापि, श्रद्धां च वीर्यं प्रक्रमात् संयमविषयं, पुनःशब्दस्य विशेष-
कत्वाद्विशेषेण दुर्लभं, यतः वहवः नैक एव रोचमाना अपि-न केवलं प्राप्तमनुष्यत्वाः शृण्वन्तो वेत्यपिशब्दार्थः, श्रद्दधाना अपि,
नो चेति च शब्दस्यैवकारार्थत्वान्नैव 'ण'मिति वाक्यालङ्कारे अथवा 'णो य ण'न्ति सूत्रत्वान्नो एतं 'पडिवज्जति'त्ति तत एव
प्रतिपद्यन्ते चारित्रमोहनीयकर्म्मोदयतः, सत्यकिश्रेणिकादिवन्न कर्तुमभ्युपगच्छन्तीति सूत्रार्थः ॥ १० ॥ सम्प्रति दुर्लभस्यास्य
चतुरङ्गस्य फलमाह—

माणुसत्तंमि आयाओ, जो धम्मं सोच्च सद्दहे । तवस्सी वीरियं लद्धुं, संवुडो निद्धुणे रयं ॥११॥ (सूत्रम्)

व्याख्या—'मानुषत्वे' मनुजत्वे 'आयातः' आगतः, किमुक्तं भवति ?-मानुषत्वं प्राप्तो, य इत्यनिर्दिष्टस्वरूपो य एव कश्चि-
द्धर्मं श्रुत्वा 'सद्दहे'त्ति श्रद्धत्ते-रोचयते 'तपस्वी' निदानादिविरहितया प्रशस्यतपोऽन्वितः, कथं ?-'वीर्यं' संयमोद्योगं लब्ध्वा
'संवृतः' स्थगितसमस्ताश्रवः, स किमित्याह-'णिद्धुणे'त्ति निर्धुनोति-नितरामपनयति रज्यते अनेन स्वच्छस्फटिकवच्छुद्धस्वभावोऽप्या-
त्माऽन्यथात्वमापाद्यत रजः-कर्म वध्यमानकं वद्धं च, तदपनयनाच्च मुक्तिं प्राप्नोतीति भावः, उभयत्र लिप्स्यमानसिद्धौ चे
(पा. ३-३-७) ति लट्, इह च श्रद्धानेन सम्यक्त्वमुक्तं, तेन च ज्ञानमाक्षिप्तं, प्रदीपप्रकाशयोरिव युगपदुत्पादात्तयोः, तथा च
'सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः' (तत्त्वा० अ. १-सू. १) इति न विरुध्यत इति सूत्रार्थः ॥ ११ ॥ इत्थमामुष्मिकं मुक्तिफल-
मुक्तम्, इदानीमिहैव फलमाह—

सोही उज्जुभूयस्स, धम्मो सुद्धस्स चिट्ठति । णिव्वाणं परमं जाइ, घयसित्तेव पावए ॥ १२ ॥ (सूत्रम्)

व्याख्या— शुद्धि' कषायकालुष्यापगमो, भवतीति गम्यते, 'ऋजुभूतस्य' चतुरङ्गप्राप्त्या मुक्तिं प्रति प्रगुणीभूतस्य, तथा च 'धर्मः' क्षान्त्यादि 'शुद्धस्य' शुद्धिप्राप्तस्य 'तिष्ठति' अविचलिततयाऽऽस्ते इति, अशुद्धस्य तु कदाचित्कषायोदयात्तद्विचलनमपि स्यादित्याशय, तदवस्थितौ च 'निर्वाणं' निर्वृतिर्निर्वाण स्वास्थ्यमित्यर्थः 'परमं प्रकृष्टम्' "एगमासपरियाए समणे वतरियाण तेयल्लेसं वीईवयति' इत्यागमेनोक्त 'नैवास्ति राजराजस्य तत्सुख'मित्यादिना च वाचकवचनेनानूदितं 'याति प्राप्नोति, क इव?-'घय-सित्तेव त्ति' इवस्य भिन्नक्रमत्वात् घृतेन सिक्तो घृतसिक्तः पुनातीति पावकः-अग्नि', लोकप्रसिद्ध्या, समयप्रसिद्ध्या तु पापहेतुत्वात्पावक तद्वत्, स च न तथा तृणादिभिर्दीप्यते यथा घृतेनेत्यस्य घृतसिक्तस्य निवृतिरनुगीयते, ततो विशेषेणास्य दृष्टान्तत्वेनाभिधानमिति भावनीयं, यद्वा निर्वाणमिति जीवन्मुक्तिं याति,-'निर्जितमदमदनानां वाक्कायमनोविकाररहितानाम्। विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम् ॥ १ ॥' इति वचनात्, कथभूत सन्?-घृतसिक्तपावक इव तपस्तेजसा ज्वलितत्वेन घृततर्पिताग्निसमान इति सूत्रार्थः ॥ १२ ॥ पठन्ति च नागार्जुनीया -"चउद्धा संपयं लद्धुं, इहेव ताव भायते। तेयते तेजसंपन्ने, घयसित्तेव पावए ॥ १ ॥ त्ति" तत्र चतुर्धा चतुष्प्रकारां सम्पदा समृद्धिं प्रक्रमान्मनुष्यत्वादिविषयां लब्ध्वा इहैव लोके तावद् आस्तां परत्र, 'भ्राजते' ज्ञानश्रिया शोभते, 'तेजते' दीप्यते तेजसा-यथावत्तपोजनितेन सम्पन्नो-युक्तस्तेज सम्पन्न, शेष प्राग्वदिति सूत्रार्थः ॥ १२ ॥ इत्थमामुष्मिकमैहिकं च फलमुपदर्श्य शिष्योपदेशमाह—

**विगिंच कम्मुणो हेउं, जसं संचिणु खंतिए। पाढवं सरीरं हिच्चा, उड्ढं पक्कमती दिसं ॥ १३ ॥ (सूत्रम्)**

व्याख्या—'विगिंच 'त्ति वेविग्धि पृथक् कुरु 'कर्मणः' प्रस्तावान्मानुषत्वादिविघ्नकस्य 'हेतुम्' उपादानकारण-मिथ्यात्वा

---

१ एकमासपर्याय श्रमणो व्यन्तराणां तेजोलेश्यां व्यतिव्रजति ॥

विरत्यादिकं, तथा यशोहेतुत्वाद्यशः-संयमो विनयो वा, यदुक्तम्-[1]"एवं धम्मस्स विणओ, मूलं परमो से मोक्खो । जेण कित्ति सुयं सिग्घं, णीस्सेसं चाभिगच्छइ ॥ १ ॥" इति, तत् 'सञ्चिनु' भृशमुपचितं कुरु, कया ?-क्षान्त्या, उपलक्षणत्वान्मार्दवादिभिश्च, ततः किं स्यादित्याह-'पाढवं' ति पार्थिवमिव पार्थिवं शीतोष्णादिपरिषहसहिष्णुतया समदुःखसुखतया च पृथिव्यामिव भवं, पृथिवी हि सर्वंसहा, कारणानुरूपं च कार्यमिति भावो, यदि वा पृथिव्या विकारः पार्थिवः, स चेह शैलः, ततश्च शैलेशीप्राप्त्य-पेक्षयाऽतिनिश्चलतया शैलोपमत्वात्परप्रसिद्धया वा पार्थिवं 'शरीरं' तनुं 'हित्वा' त्यक्त्वा ऊर्ध्वं दिशमिति सम्बन्धः, 'प्रक्रामति' प्रकर्षेण गच्छति येन भवानिति उपस्कारो, यद्वा सोपस्कारत्वात् सूत्राणामेवं नीयते—यत एवं कुर्वन् भव्यजन्तुरूर्ध्वं दिशं प्रक्रामति ततस्त्वमतिदृढचेता इत्थमित्थं च कुर्वित्युपदिश्यते, प्रक्रामतीति वर्त्तमानसामीप्ये वर्त्तमाननिर्देश आसन्नफलावाप्तिसूचक इति सूत्रार्थः ॥ १३ ॥ इत्थं येषां तद्भव एव मुक्त्यवाप्तिस्तान् प्रत्युक्तं, येषां तु न तथा तान्प्रत्याह—

**विसालिसेहिं सीलेहिं, जक्खा उत्तर उत्तरा । महासुक्का व दिप्पंता, मन्नंता अपुणोच्चयं ॥ १४ ॥ सूत्रम् ॥**

**अप्पिया देवकामाणं, कामरूवविउव्विणो उड्ढं कप्पेसु चिट्ठंति, पुव्वा वाससया बहू ॥ १५ (सूत्रम्)**

व्याख्या—'विसालिसेहिं'ति मागधदेशीयभाषया विसदृशैः-स्वस्वचारित्रमोहनीयकर्मक्षयोपशमापेक्षया विभिन्नैः 'शीलैः' व्रतपालनात्मकैरनुष्ठानविशेषैः, किम् ?-इज्यन्ते पूज्यन्त इति यक्षाः, यान्ति वा तथाविधर्द्धिसमुदयेऽपिक्षयमिति यक्षाः, उर्ध्वं कल्पेषु तिष्ठन्तीति उत्तरेण सम्बन्धः, 'उत्तरोत्तराः' उत्तरोत्तरविमानवासिनः, उत्तरो वा उपरितनस्थानवर्त्त्युत्तरः-प्रधानो येषु तेऽमी उत्तरोत्तराः 'महाशुक्का' अतिशयोज्ज्वलतया चन्द्रादित्यादयः, त इव 'दीप्यमानाः' प्रकाशमानाः, अनेन शरीरसम्पदुक्ता, सुखसम्पदमाह-'मन्यमाना' मनसि अवधारयन्तः शब्दादिविषयावाप्तिसमुत्पन्नरतिसागरावगाढतयाऽतिदीर्घस्थितितया वा, किम् ?-न

१ एवं धर्मस्य विनयो मूलं परमोऽसौ मोक्षः । येन कीर्तिं श्रुतं शीघ्रं निःश्रेयसं चाभिगच्छति ॥ १ ॥

पुनश्च्यवनम् अपुनश्च्यवस्तम्-अधस्तिर्यगादिषूत्पत्त्यभावं, यदुक्तं 'मन्यमाना अपुनश्च्यवम्' इति, तत्रोक्तमेव हेतुं सूत्रकृदाह-'अर्प्पिया' इत्यादिना, 'अर्प्पिता' प्राकृततयोक्तेन ढौकिता इव, केषाम्?-काम्यन्ते-अभिलष्यन्ते इति कामा देवानां कामा देवकामाः-दिव्या रूपादयः, 'कामरूपविउव्विणो'त्ति सूत्रत्वात्कामरूपविकरणा-यथेष्टरूपाभिनिर्वर्तनशक्तिसमन्विताः, कुर्वन्ति हि ते उत्तरवैक्रियाणि समवसरणागमनादिषु तथा तथेति, येऽपि प्रयोजनाभावान्न कुर्वन्ति तेषामपि शक्तिरस्त्येवेत्येवमुच्यते, 'उर्ध्वं' कल्पोपरिवर्तिषु ग्रैवेयकेष्वनुत्तरविमानेषु च कल्पेषु सौधर्मादिषु यदि वा-ऊर्ध्वम्-उपरि कल्प्यन्ते विशिष्टपुण्यभाजामवस्थितिविषयतयेति सौधर्मादयो ग्रैवेयकादयश्च सर्वेऽपि कल्पा एव तेषु 'तिष्ठन्ति' आयुःस्थितिमनुपालयन्ति पूर्वाणि-वर्षसप्ततिकोटिलक्षषट्पञ्चाशत्कोटिसहस्रपरिमितानि बहूनि, जघन्यतोऽपि पल्योपमस्थितित्वात्, तत्रापि च तेषामसङ्ख्येयानामेव सम्भवात्, एवं वर्षशतान्यपि बहूनि, पूर्ववर्षशतायुषामेव चरणयोग्यत्वेन विशेषतो देशनौचित्यमिति ख्यापनार्थमित्थमुपन्यास इति सूत्रार्थः ॥१४-१५॥ ततश्च्युतानामेतावदेव फलमित्याशङ्क्याह—

तत्थ ठिच्चा जहाठाणं, जक्खा आउक्खए चुआ। उवेंति माणुसं जोणिं, से दसंगेऽभिजायइ ॥१६॥ (सूत्रम्)

व्याख्या—'तत्र' तेषूक्तरूपोत्पत्तिस्थानेषु 'स्थित्वा' इत्यासित्वा यथास्थानम्' इति यद्यस्य स्वानुष्ठानानुरूपं यदिन्द्रादिपदं तस्मिन् यक्षाः 'आयुःक्षये' स्वजीवितावसाने 'च्युताः' भ्रष्टा 'उवेन्ति'त्ति उपयन्ति मनुष्याणामियं मानुषी तां 'योनिम्' उत्पत्तिस्थानं, तत्र च 'से' इति स सावशेषकुशलकर्मा कश्चिज्जन्तुः दशाङ्गानि भोगोपकरणानि वक्ष्यमाणान्यस्येति दशाङ्गः अभिजायते, एकवचननिर्देशस्तु विसदृशशीलतया कश्चिद्दशाङ्गः कश्चिन्नवाङ्गादिरपि जायत इति वैचित्र्यसूचनार्थः, यद्वा 'से' इति सूत्रत्वात् तेषां दशानामङ्गानां समाहारो दशाङ्गी, प्राकृतत्वाच्च पुंसा निर्देशः 'अभिजायते' उपभोग्यतयाऽऽभिमुख्येनोत्पद्यत इति सूत्रार्थः ॥ १६ ॥ कानि पुनर्दशाङ्गानीत्याह—

चत्तारि कामखंधाणि, तत्थ से उववज्जइ ॥ १७ ॥
खित्तं वत्थु हिरण्णं च, पसवो दासपोरुसं । चत्तारि कामखंधाणि, तत्थ से उववज्जइ ॥ १८ ॥ (सूत्रम्)
मित्तवं नाइवं होइ, उच्चागोत्ते य वण्णवं । अप्पायंके महापन्ने, अभिजाय जसो वले ॥ १८ ॥ (सूत्रम्)
मित्तवं नाइवं होइ, उच्चागोत्ते य वण्णवं । अप्पायंके महापन्ने, अभिजाय जसो वले, तथा वसन्त्यस्मिन्निति

व्याख्या—'क्षि निवासगत्योः' क्षियन्ति निवसन्त्यस्मिन्निति क्षेत्रं-ग्रामारामादि सेतुकेतूभयात्मकं वा, तथा वसन्त्यस्मिन्निति
वास्तु-खातोच्छ्रितोभयात्मकं 'हिरण्यं' सुवर्णम्, उपलक्षणत्वात् रूप्यादि च, 'पशवः' अश्वादयः, दास्यते-दीयते पभ्य इति
दासाः-पोष्यवर्गरूपास्ते च पोरुसंति-सूत्रत्वात्पौरुषेयं च-पदातिसमूहः दासपौरुषेयं, 'चत्वारः' चतुःसङ्ख्याः, अत्र हि क्षेत्रं
वास्त्विति चैको हिरण्यमिति द्वितीयः पशव इति तृतीयो दासपौरुषेयमिति चतुर्थः, एते किमित्याह—काम्यत्वात् कामाः-मनोज्ञ-
शब्दादयः, तद्धेतवः स्कन्धाः पुद्गलसमूहाः ततः कामस्कन्धाः, यत्र भवन्तीती गम्यते, प्राकृतत्वाच्च नपुंसकनिर्देशः, 'तत्र' तेषु
कुलेषु 'से' इति स 'उपपद्यते' जायते । अनेन चैकमङ्गमुक्तं, शेषाणि तु नवाङ्गान्याह—मित्राणि-सहपांशुक्रीडितादीनि सन्त्यस्येति
मित्रवान्, ज्ञातयः-स्वजनाः सन्त्यस्येति ज्ञातिमान् भवति, उच्चैःलक्ष्म्यादिक्षयेऽपि पूज्यतया गोत्रं-कुलमस्येत्युच्चैर्गोत्रः, चः समुच्चये,
वर्णः-श्यामादिः स्निग्धत्वादिगुणैः प्रशस्योऽस्येति वर्णवान्, 'अल्पातङ्कः' आतङ्कविरहितो नीरोग इत्यर्थः, महती प्रज्ञाऽस्येति
महाप्रज्ञः-पण्डितः, 'अभिजातः' विनीतः, स हि सर्वजनाभिगमनीयो भवति, दुर्विनीतस्तु शेषगुणान्वितोऽपि न तथेति, अत एव
च 'जसो'त्ति यशस्वी, तथा च सति 'वले'त्ति वली कार्यकरणं प्रति सामर्थ्यवान्, उभयत्र सूत्रत्वान्मत्वर्थीयलोपः, एकैकोऽपि
हि मित्रत्वादिगुणस्तत्तत्कार्याभिनिर्वर्त्तनक्षमः, किं पुनरमी समुदिताः?, शरीरसामर्थ्यञ्चेह वलमिति ॥ १७-१८ ॥ तत्किमेवंविधगुण-
सम्पत्समन्वितं मानुषत्वमेव तत्फलमित्याह—

भोच्चा माणुस्सए भोए, अप्पडिरूवे अहाउयं । पुव्विं विसुद्धसद्धम्मे, केवलं बोहि बुज्झिया ॥१९॥ [सूत्रम्]

व्याख्या—'भुक्त्वा' आसेव्य 'मानुष्यकान्' मनुष्यसम्बन्धिनः भुज्यन्त इति भोगाः—मनोज्ञशब्दादयस्तान्, अविद्यमान

प्रतिरूपमतिप्रकर्षपरत्वेनानन्यतुल्यमेषामित्यप्रतिरूपा तान्, 'यथायु' आयुषोऽनतिक्रमेण पूर्वं-पूर्वजन्मविशुद्धो निदानादिरहितत्वेन 'सद्धर्म (र्मा) शोभनो धर्मोऽस्येति विशुद्धसद्धर्मा, केवलत्वाच्च 'धर्मादनिच् केवलादिति (पा० ५-४-१२४) इत्यनिच् भवति, 'केवलम्' अकलङ्कां 'बोधिं जिनप्रणीतधर्मप्राप्तिलक्षणा 'बुद्ध्वा' अनुभूय प्राप्येतियावत् ॥ १९ ॥ ततोऽपि किमित्याह—

**चउरंगं दुल्लभं मत्ता, संजमं पडिवज्जिया। तवसा धुतकम्मंसे, सिद्धे भवति सासए ॥ २० ॥ त्तिबेमि (सूत्रम्)**

व्याख्या—चतुर्णामङ्गानां समाहारश्चतुरङ्गी तामभिहितस्वरूपा 'दुर्लभां' दुष्प्रापां 'मत्वा' ज्ञात्वा 'संयमं' सर्वसावद्ययोगविरतिरूपं 'प्रतिपद्य' आसेव्य, 'तपसा' बाह्येनान्तरेण च धुतम्-अपनीत, कर्मसिक्ति-कार्मग्रन्थिकपरिभाषया सत्कर्मनिनेति धुतकर्मांशः, तदपनयनाच्च च घातीनामप्यर्थतोऽपनयनमुक्तमेव, यद्वा धुता कर्मणोऽंशा भागा येन स तथाविध, किमित्याह—सिद्धो भवति, स च किमाजीविकमतपरिकल्पितसिद्धवत् पुनरिहैति उत नेत्यत आह—'शाश्वत' शश्वद्भवनात्, शश्वद्भवन च पुनर्भवनिबन्धनकर्मबीजात्यन्तिकोच्छेदात्, तथा चाह—'दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुर। कर्मबीजे तथा दग्धे, न रोहति भवाङ्कुर ॥ १ ॥" इति, इह पुनस्तस्येहागमनकल्पनमतिमोहविलसितं, तथा च स्तुतिकृत्-दग्धेन्धन पुनरुपैति भव प्रमथ्य, निर्वाणमप्यनवधारितभीरुनिष्ठ । मुक्त स्वयंकृतभवश्च परार्थशूरस्त्वच्छासनप्रतिहतेष्विह मोहराज्यम् ॥ १ ॥ इति सूत्रार्थं ॥२१॥' इति परिसमाप्तौ, ब्रवीमि प्राग्वदिति । उक्तोऽनुगमः, सम्प्रति नयाः, तेऽपि प्राग्वदेव। इति श्रीशान्त्याचार्यविरचितायां शिष्यहितायामुत्तराध्ययनटीकायां तृतीयमध्ययन समाप्तमिति ॥

तृतीयमध्ययनं समाप्तम् ॥

॥ इति श्रीउत्तराध्ययनसूत्रे प्रथमोभागः समाप्तः॥